॥ श्रीः ॥

श्रीमती समस्त जगदीश्वरी पराशक्तिर्विजयते तराम्.

# श्रीपरदेवता स्तोत्ररत्नावली.

॥ श्रीशोभनासिंह विरचित ॥

सेयम्

स्वेनैव योधपुर मुद्रण यन्त्रालये मुद्रापयित्वा प्रकाशिता ॥

शाके १८-१७ संवत् १९५२ फाल्गुन मासे ॥

## सुज्ञ जनों को सूचना

इस पुस्तक में कवर्गी खकार की जगह मूर्धन्य षकार ही छापेवाले ने छापाहै, और कहीं२ कवर्गीभी भूल से षकारकी जगह छप गया है, और कहीं २ एक मात्रा की जगह दो मात्रा और दो की जगह एक मात्रा और कही सानुस्वार दो मात्रा चाहिये वहां अनुस्वार मात्रा नहीं है: सो वहुधा तो शुद्धि पत्र में छपा दिया है, और कहीं २ भाषा जानके वैसा ही रक्खा है, कहीं द्वित्व अक्षर चाहिये वहां नहीं है तो विद्वान् लोग क्षमा करेंगे; और पठन समय सुधार कर पढेंगे, और संस्कृत में भी शुद्ध शुद्ध पाठ छपवातो दीया है तो भी कहीं दृष्टि बुद्धि दोष से जो अशुद्धता होय तो श्रीजगज्जननी तो क्षमा करेंगी ही परंतु तद्भक्त वा और विज्ञ लोग भी क्षमा करके अपनी महत्ता से हृदय में आनंदित होवेंगे ॥

पृष्ठ ३५ में श्लोक २९-३० श्रीगंगाजी के हैं सो इस स्तोत्रके नहीं है ॥

पृ० १०४ पं० २२ त्रिकाल मेककालं वानित्यमेका ग्रमानसात् ॥ ध्यात्वा कारुण्यं संदोग्धों महात्रिपुर सुन्दरीम् ॥ १ ॥ षण्मास मब्दंनित्यंवा मनसापूजनंचरेत् ॥ अभीष्टसिद्धिमाप्नोति भक्तोनियमसंस्थितः ॥ २ ॥ ए२श्लोक दोय मानसी पूजारे फलस्तुतिराहेसो अन्तमें पढ़णा ॥ देहोनित्यः कल्पितायें पदार्था स्तेवैसत्याः सन्तिनोमानसेन ॥ तस्मादेषुत्यज्यतां रागबुद्धि रीशेनित्यंयोजय स्वान्तमिष्ट ॥

## पण्डितांरे कियाहुवा श्लोक ॥

॥ श्रीः ॥

# श्रीमती समस्तजगदीश्वरी पराशक्ति-र्विजयते तराम् ॥

---

## श्री पराम्बिका स्त्रोत्रावली ॥

---

श्रीगणेशायनमः ॥ श्रीमद्गुरुश्रीपादुकाभ्यो नमः ॥ ॐ श्रीमत्परांबिकाप्रकाशविमर्शसामरस्य निर्वाणाख्यचरणचतुष्टयेभ्यो नमः ॥ ॐ श्री सरस्वतीश्रीपादुकाभ्यो नमः ॥ ॐ श्री श्री नागणेचीनाम्नीकुलदेवी श्री पादुकाभ्यो नमः ॥ ॐ श्रीचामुण्डाश्रीपादुकाभ्यो नमः ॥ ॐश्री।हिंगुलाम्बा श्रीपादुकाभ्यो नमः ॐ श्रीजलन्धरनाथ श्री पादुकाभ्यो नमः ॥ ॐ श्री दुर्गाम्बा श्री पादुकाभ्यो नमः ॥ ॐ श्री बालात्रिपुरसुन्दरी श्रीपादुकाभ्यो नमः ॥ ॐ श्री समस्तजगदीश्वरी श्रीमन्महात्रिपुरसुन्दरी श्री पादुकाभ्यो नमः ॥ ॐ श्री मदस्मत्पितृचरणकमलेभ्यो नमः ॥ श्रीमन् मरुदेशाधीश योधपुर नाथ हंसवंशावतंस राठोड़कुलशिरोमणि निखिल भूपोत्तंस मणिमालामरीचिनीराजित पादपङ्कजस्य राजराजेश्वर महाराजाधिराज महाराजाऽष्टोत्तरशत श्रीयुत मानसिंहस्यात्मजेन पूज्यपादाराध्य श्रीमदानन्दानन्दनाथस्य दयनीय शि-

न्येण ब्रह्मोपेंद्ररुद्रमहेंद्रप्रभृत्यशेषलेखमुकुटमालामाणिनीराजि
तपादपीठिकायाश्चतुर्दशभुवनाधीश्वर्य्याःश्रीमन्महा त्रिपुरसु-
न्दर्य्याश्चरणपङ्कजचिन्मकरन्दमधुलिहा सर्वोपमाविराजमान
राजराजेश्वर महाराजाधिराज महाराजाऽष्टोत्तरशत श्रीयुत
श्रीजसवन्तसिंह शासनस्थितेन श्रीशिवराष्ट्राधीश चतुर्ग्रामा
धिपातिना रावराजेन श्रीशोभनसिंहेन स्वर्णसिंहोपनाम्ना
विरचिता श्रीहैयङ्गवीन हृदयायाः सर्वादिमायाः ॥

श्रीपरदेवतायाः स्तोत्रावली योधपुर यन्त्रालये
मुद्रापयित्वा प्रकाशिता ॥

——

श्रीगणेशायनमः ॥

# श्रीपरदेवतायाः स्तोत्ररत्नावली लिख्यंते ।

---

श्रीमद्गुरुपादुकाभ्यो नमः ॥

सर्व्वेशे सर्व्वरूपेम्ब सर्व्वशक्तिधरे शिवे । दासस्य ते महेशानि दुःखं दूरतरं कुरु ॥ १ ॥ भ्राम्यमाणं स्वकर्मौघैः पुरा चीर्णैर्दयानिधे । तमाश्वासय मां देवि दुःखं० ॥ २ ॥ अहं तु दुःखयोग्योस्मिह्यनाचाररतः परे तथापि शरणापन्नो दुःखं० ॥ ३ ॥ दयार्द्रचित्तासदृशी तव नास्त्यन्यदेवता । दुःखदारिद्र्यहरणी दुःखं० ॥ ४ ॥ विकर्म्माकर्म्मकृद् दुःखी जातोनामजपात्तव । प्रायश्चित्तकृदेवाऽहं दुःखं० ॥ ५ ॥ दयानिधिरितिख्याता शरणागतवत्सला । अधमोद्धारिणीनाम्ना दुःखं० ॥ ६ ॥ दुर्गाणिच तरत्याशु भद्रनामजपात्तव । इति सत्येनदेवेशि दुःखं० ॥ ७ ॥ तवनामप्रभावेण सकलाहि मनोरथाः । ममसन्तुमेहशानि दुःखं० ॥ ८ महादुःखौघदलनि महापातकनाशिनि । महादेवि नमस्तेऽस्तु दुःखं० ॥ ९ ॥ नामनावंसमारूढस्तरेत्संसारसागरम् । इतिसत्येन देवेशि दुःखं० ॥ १० ॥ कल्याणि कालि कलितेन्दुकलावतंसे कामे

शि कामशिवशोभितदक्षभागे । कल्याणकारिणि कलङ्कहरे परेशि मां पाहि पाहि परमेशि नमोनमस्ते ॥ ११ ॥ सर्वदुःखहरं स्तोत्रं घोरदुःखेपठेन्नरः । दुःखौघात्संप्रमुच्येत महादेव्या प्रसादतः ॥ १२ ॥ इतिश्रीसर्वदुःखहरं स्तोत्रं संपूर्णम् ॥

श्रीनाथकृपयालभ्यः सामरस्यविलासिनि । तत्स्वरूपप्रकाशोमे हृदिभूयादहर्निशम् ॥ १ ॥ कोट्यग्नीन्द्विनसंप्रख्यो व्याप्यव्यापकतांगतः तत्स्व० ॥ २ ॥ पूर्णःसृष्टिस्थितिलयकर्त्ता कर्ताविबोधकः । तत्स्व० ॥ ३ ॥ अबोधघनिविडध्वान्तध्वंसकोऽत्यन्तहर्षदः । तत्स्व० ॥ ४ ॥ भवसर्पभयत्रासहरणेताक्ष्यसन्निभः । तत्स्व० ॥ ५ ॥ अन्तर्मुखैर्नित्यलभ्यो ह्यलभ्यस्तद्वहिर्मुखैः । तत्स्व० ॥ ६ ॥ अनेकजन्मसंसिद्ध योगाभ्यासप्रकाशितः । तत्स्व० ॥ ७ ॥ ऐश्वर्यज्ञानवैराग्य धर्मश्रीयशसप्रदः । तत्स्व० ॥ ८ ॥ एकोनानाभासकारी ह्यनेकैकप्रकाशक तत्स्व० ॥ ९ ॥ स्वरूपप्रकाशाष्टकं श्रीपरायाः कृपासागरायाः पठेद्यः प्रभाते ॥ प्रकाशाभिलाषी परप्रेमयुक्तो भवेत्तस्याचिरे स्वरूपप्रकाशः ॥ १० ॥ श्रीप्रकाशाष्टकं संपूर्णम् ॥

## ॐ श्री अन्तेस्मृतिदायिनी विजयतेतराम्

---

शिवे सानुकम्पे शरण्ये महेशि प्रपन्नार्तिहन्त्रि प्रभावैस्त्वदीयैः ॥ शरीरान्तकाले पदाब्जं त्वदीयं मनोमेनजह्यात

थात्वं प्रसीद ॥ १ ॥ निरस्यैवदेहादिसर्वं स्वभावं सहस्रार्कतुल्ये सदानन्द पूर्णे । विशेत्तावके देवि रूपे मनो-मे तथा त्वं प्रसीद प्रपन्ने परेशि ॥ २ ॥ श्रुतीनां शिरोभिः स्तुते साररूपे परे सामरस्य स्व रूपे त्वदीये रहस्येशिव प्रोक्तशास्त्रस्य मातर्मनोधारणा निश्चला मे सदास्यात् ॥ ३ ॥ इदंतास्पदं सर्वमम्ब प्रसादात्तव श्रीगुरोश्चस्वरूपं य-थाहं ॥ निजानंदरूपे तथादेवि विद्यां कृपार्द्रैः कटाक्षैः शिवे त्वं प्रसीद ॥ ४ ॥ प्रविष्टं कृपातः प्रकाशात्मके ते पदाब्जे म-नोनापसर्पेत् कदाचित् ततः क्वापिकारुण्यलिलाविलासे तथा स्वानुभावेन मह्यं प्रसीद ॥ ५ ॥ प्रवृद्धोमनोर्मिर्मदी यस्त्वदीये पदाब्जे यदिस्यात्स्वभावातिरम्ये ॥ तदान्यैरशेषैः शिवे मुक्त्युपायै रलंयोगयागादिकैर्भक्तिगम्ये ॥ ६ ॥ कर्तुं ह्यकर्तुं तथाचान्यथैव मातः प्रकर्तुंच शक्तात्वमेका ॥ इत्येव मत्वाशरणंगतस्ते मांत्राहि मांत्राहि कृपार्द्रचित्ते ॥ ७ ॥ यद्य-प्यहं त्रिपुरसुन्दरि कामयुक्तः क्रोधी खलः कपटधुग्विषयानु-रक्तः ॥ पापी तथापि शरणागतवत्सलेत्वत्पादारविन्दयुगलं शरणं प्रपद्ये ॥ ८ ॥ कृपाब्धिर्गुणाब्धिः सुखाब्धिः पराम्बा परप्रेमपाथोनिधिश्चन्द्रवक्त्रा ॥ महाविश्वसिन्धोः सदादीर्घ नौका ॥ पुनर्मे पुनर्जल्पतोयान्तु घस्राः ॥ ९ ॥ इमां श्रीजग ज्जीवनिस्तारकर्त्रीस्तुतिं यः पठेद्ध्यानकृद्भावनिष्ठः ॥ सदाश्री पराम्बाप्रसादान्मनुष्यः पदं यात्यनौपम्यरम्यंतदीयम् ॥ १०

। इतिश्रीजगज्जीवनिस्तारकर्त्रीस्तुतिः समाप्ता ॥ अलौकि
ककलानिधिर्वदनरूपईशे तव सदोदययुतोन्वहं प्रकटतापहा
री नृणाम् ॥ सतांहृदयपङ्कजप्रमुदितःस्वयंपूर्णितो जयत्य
विरतं शिवे भवसमुद्रहारिप्रभः ॥ १ ॥ चकास्त्यतितरां मुखं
हरिणलक्ष्महीनःशशी ॥ निजस्मरणरागिणां जननि जाड्य
हारीवरः ॥ अपूर्वइहतावकं सुखसमाजसंवर्द्धकः किरत्
हेमतसुधारसं जगति पापतापापनुत् ॥ २ ॥ विरञ्च्यघटितो
द्भुतस्सकलकालशोभाऽन्वित स्तवाननसुधाकरोविषयभावदूरं
गमः ॥ अकामिजनभावितोऽप्यखिलकामसंदोहनो जयत्य
धिकरोचिषां पटलमण्डलोऽखण्डलः ॥ ३ ॥ अयं समुदयी
सदा वदनचन्द्र ईड्ये शिवे ॥ नितांतमुदयंकरः सकललोक
नाथः प्रभुः ॥ गुणाकरविभाकरोनिखिलदोषहारी नृणा मना
देनिधनोभवत्त्वघवितापशान्त्यैमम ॥ ४ ॥ तवाननसुधानि
धेर्हसति विश्ववारां निधिं प्रफुल्लति शिवाननं कमलमम्ब
कालाम्बुदे ॥ प्रकाशति कृपापगामवति दासतापापहा महो
हेमतसुचन्द्रिका कडति नीलकण्ठं वरा ॥ ५ ॥ तवाननसुधानि
धे स्तुतिमिमां त्रितापापहां चकोरनर आलपेन्मुखसुधाकरं
चिन्तयन् ॥ मुखेन्दुविनिवर्धिते विलसिते कृपासागरे रसं
ह्यनुभवत्यसौ सकलकामतृप्तिप्रदम् ॥ ६ ॥ इतिश्रीअलौकि
कमुखेन्दुचन्द्रिकास्तुतिः समाप्ता ॥ श्रीमद्वाग्वैभवविधायिनी
विजयतेतराम् ॥ करुणायमाननयनां निजमुखकान्तिपराकृ

तेन्दुशोभाम् ललितां सुमन्दहासितामम्बाम
॥ १ ॥ ऐक्षवचापं बाणान् पुष्पमयाञ्जातरूप
संदधतीं सुदतीं स्वानन्दसुन्दरीं वन्दे ॥ २
पाङ्गीं चार्वङ्गीं सकललोकनिर्मात्रीम् ॥ धात्र
चञ्चच्चन्द्रार्द्धशेखरांवन्दे ॥ ३ ॥ स्मेराधिच
णिक्याभरणशोभिताङ्गलताम् ॥ मृगनाभिवि
रुणचैलशोभिनीं वन्दे ॥ ४ ॥ निजमुखनि
तसुधासारसर्वसौभाग्याम् ॥ आज्ञाधीनचतु
श्वराङ्गनां वन्दे ॥ ५ ॥ हर्षितभक्तमयूरां चि
तनींत्रिपुराम् ॥ करुणारसपरिपूर्णां मद्वैता
६ ॥ काश्मीरकान्तिवर्णां तरणींभवासिन्धुखेद
ङ्कुमचर्चितदेहां शोभागुणरूपवारिधिं वन्दे
लिंगत्रयपुरत्रयत्रिगुणिदेवपुरा ॥ वर्त्तनशीलां
स्वरूपिणीं वन्दे ॥ ८ ॥ भक्तस्यकल्पलतिकां
न्तितार्थदायिमणिम् ॥ अक्षयनिधिंमनोज्ञां स
षधिं वन्दे ॥ ९ ॥ श्यामा तारा त्रिपुरा भुवने
न्ना धूमा सुपीतवसना सुमुखी कमलामयीं
एतद्दशकं मातुः श्रीललितायाः समस्तरूपाय
ति सयायाद्भक्ताभास्वन्मणिद्वीपम् ॥ ११ ॥
र्मनि तिष्ठन्ध्यायन् पराम्बिकारूपम् ॥ निश्च

पठन् परास्वापदं याति ॥ १२ ॥ इति श्रीआर्यासौभाग्य दशकंसमाप्तिमफाणीत् ॥

---

श्रीमती वाङ्मनोतीतस्वरूपसौंदर्या विजयतेतराम् ॥

---

श्रीगणेशायनमः ॥ ॐकल्याणि कालि कमलासनिकाम रूपे कृष्णार्चितांघ्रि कमले कमलायताक्षि ॥ कामाक्षि काल भयकर्त्तिनि कोमलाङ्गि संसारजालपतितं जगदम्बरक्ष ॥ १॥ एणाङ्कभानुहुतभुङ्नयने त्रिशक्ते हेरुद्रपूजितपदे प्रणतार्त्ति हन्त्रि एकाकिनि प्रणतपालिनि विश्वरूपे संसारजालपतितं जगदम्ब रक्ष ॥ २ ॥ ईशेश्वरि प्रलयसंस्थितिसृष्टिकर्त्रि स्वात्मैक्यभावनपरायणबोधदात्रि एकाग्रचित्तनिजभक्तकृतास्पदे मां संसारजालपतितं जगदम्ब रक्ष ॥ ३ ॥ लज्जाभयादिपशु पाशविनाशकर्त्रि वाणीसमुद्रतनयापरिवीजिताङ्गि ॥ उद्यत्स हस्रकरवर्णसमानकान्ते संसारजालपतितं जगदम्ब रक्ष ॥ ४ ॥ ह्रींभावनाप्रकटितस्वपदारविन्दे हेकल्पवाटिमणिमण्ड पमध्यसंस्थे ॥ हेशम्भुवर्त्मविचरज्जनशीघ्रलभ्ये संसारजालप तितं जगदम्ब रक्ष ॥ ५ ॥ हर्षप्रफुल्लनयने हरिकेशयोने हा लासदप्रमुदिते हरिखाङ्कमौले ॥ हैयङ्गवीनहृदये हयमेधतुष्टे

संसारजालपतितं जगदम्ब रक्ष ॥ ३ ॥ सर्वात्मिके सकललो
कनिवासभूमे संध्यारुणाम्बरधरेऽरुणपुष्पपूज्ये ॥ सन्मानशा
लिपरिषेवितपादपद्मे सं० ॥ ७ ॥ कल्याणवृष्टिकरुणार्द्रकटा
क्षपाते कामप्रसादिनि कलंकहरे कुलेशि ॥ मुक्तासुहारकुच-
भारनताङ्गयष्टे सं० ॥ ८ ॥ हर्षप्रदे हरिणशावकनेत्रयुग्मे
हेलीकृतागणितपापजने गणेशि ॥ गायत्रि गानरसिके गज-
वक्त्रमातः सं० ॥ ९ ॥ लब्धस्वरूपपरमेऽखिलभावविज्ञे हेपु-
ष्पबाणपरिशोभितहस्तपद्मे ॥ आदानदानरहिते हिमशैल-
कन्ये सं० ॥ १० ॥ ह्रींकारमन्त्रजपतत्परसंप्रतुष्टे ह्रीश्रीगि-
रादिकसमस्तकलत्ररूपे ॥ नासाग्रमौक्तिकलसद्वदनारविन्दे
सं० ॥ ११ ॥ सर्वोत्तमासनगते परमात्मरूपे ब्राह्म्यादिका
ष्टकसमर्चनसुप्रसन्ने ॥ श्रुत्यन्तगीतचरणे करुणाकरे मां सं०
॥ १२ ॥ कल्पान्तशम्भुकृतताण्डवसाक्षिणि त्वं सत्यस्वरूपि-
णि सनातनि सर्वगन्त्रि ॥ भक्तप्रियेपरममङ्गलदिव्यमूर्त्ते सं०
॥ १३ ॥ लक्ष्मीश्वरप्रभृतिदेववरप्रपूज्ये स्वाहास्वधास्तनयुगे
प्रियकप्रियेशि ॥ दुर्गे शिवे परमहंसपदप्रदे मां सं० ॥ १४ ॥
ह्रींकारनामजपभोगविमुक्तिदात्रि भण्डप्रचण्डदलिनि प्रकट-
प्रभावे ॥ हेदण्डनाथनमितांघ्रियुगे शरण्ये सं० ॥ १५ ॥
श्रीमंत्रराजयुतमेतदलक्ष्यरूपं स्तोत्रंपठेद्भुविजनः परदेवतायाः
मूर्तिंनिधाय हृदये सहिविश्वजालं संछिद्ययातिसुखमातुलिकंप
रंयः॥१६॥जनोयंस्वर्णाख्यस्तव जननिपादैकशरणःकृपादृष्ट्यै
नस्य स्वकृतपरितापंपरिहर ॥ मदर्थेमातङ्गि प्रकटय कृपान्ते
ऽस्तु नमनं कुरु त्वं विज्ञप्तिं त्रिभुवनमहाराजमहिषीम् ॥ १७॥

इतिश्रीपरदेवतालक्ष्यब्रह्मविद्याजगज्जालनाशनंस्तोत्रं संपूर्णम् ।

श्रीमती संविद्रूपिणी विजयतेतराम् ॥

सर्वावस्थास्वपि तथा सर्वदेशेषु वै पुनः ॥ सर्वकालेषु सैवैका शरणं परमं मम ॥ १ ॥ त्रिपुरा ब्रह्मसंविच्छ्रीः परा सच्चित्सनातनी ॥ ईश्वरी परमेशानी शरणं परमं मम ॥ २ ॥ सामरस्य स्वरूपा च चिद्घनानन्ददायिनी नित्या शुद्धा च बुद्धा च श० ॥ ३ ॥ पूर्णाहन्तात्मिका पूर्णा परमा परमोत्तमा परब्रह्मात्मिका देवी श० ॥ ४ ॥ चितिश्चिल्लक्षणाधारा चैतन्याचिन्त्यरूपिणी ॥ चराचरस्वरूपाच श० ॥ ५ ॥ सकृद्भाता भासमाना भास्वती वरदायिनी ॥ विमाना विमला विश्वा श० ॥६॥ अनिर्देश्याद्वितीया च साक्षिणी चाक्षरा शिवा अनन्तानन्तरूपा च श० ॥ ७ ॥ ऊहापोहविनिर्मुक्ता हेयोपादेयवर्जिता ॥ अस्पृश्या स्वात्मरूपासा श० ॥ ८ ॥ यद्भासा भासितं सर्वं जगदेतच्चराचरम् ॥ परं ज्योतिःस्वरूपा सा श० ॥ ९ ॥ अलक्ष्या लक्षिता सर्वैः स्वात्मीकृत्य च सर्वदा ॥ अनुभूतिस्वरूपा या श० ॥ १० ॥ अन्तर्लक्ष्या योगिजनैर्बहिर्लक्ष्याऽल्पबुद्धिभिः ॥ अन्तर्बहिश्च सर्वज्ञैः श० ॥ ११ ॥ निजानन्दात्मिका नित्या नवीनानन्ददायिनी ॥ निरंजना नित्यलाभा श० ॥ १२ ॥ निष्कलङ्का निराभासा नित्योत्कृष्टा निराकुला ॥ निर्मानमोहा नित्यश्रीः श० ॥ १३ ॥ लोकोत्तरानुत्तरा च ह्यलौकिकगतिः सती ॥ अनन्तरा सारतरा श० ॥ १४ ॥ शून्या शून्यालया शान्ता शान्त्यतीताखिलेश्वरी ॥ अतर्क्यासर्वसिद्धान्ता श० ॥ १५ ॥ स्वतन्त्रा कालकलना

हीना विछिन्नरूपिणी ॥ अनन्यभाता विरजा श० ॥ १६ ॥ तत्त्वं चासि पदव्यक्ताऽयमात्मा ब्रह्मविश्रुता ॥ ब्रह्मास्म्यहं तथारूपा श० ॥ १७ ॥ अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्म विमर्शिता ॥ गुरुवक्त्रोदिता या सा श० ॥ १८ ॥ सर्वंखल्वि दमेवाहं नान्यदस्ति सनातनम्॥श्रीमद्भागवतं रूपं श० १९॥ चराचराखिलाधारा षट्त्रिंशत्तत्वरूपिणी ॥ तत्वातीता परात्मा सा श० ॥ २० ॥ इतिस्तोत्रं महापुण्यं परां ध्यात्वा पठेन्नरः॥ स्तोत्रार्थमानसोनित्यं सोभीष्टफलमाप्नुयात्॥ २१ ॥ वेदवेदा न्तवाक्यार्थमन्त्रतन्त्रार्थसंयुतम् ॥ स्तोत्रं पुनः पुनर्जप्त्वा सदाभ्यासी सुखीभवेत् ॥ २२ ॥ इति श्रीचरणशरणदस्तोत्रं समाप्तम् ॥

---

ॐ अत्यन्तसुन्दराकारे सुकुमारे मनोहरे ॥ वाङ्मनोतीत रूपे मे वर्धतां प्रेमवर्धताम् ॥ १ ॥ कोटिसूर्यसमप्रख्ये को टिशीतांशुशीतले ॥ प्रेमाम्बुधौ गुणनिधौ वर्धतां प्रेमवर्धताम् ॥ २ ॥ आभिषेचानिके नित्यमङ्गले नित्यशोभने ॥ दयार्द्रीभूतहृदये वर्धतां प्रेमवर्धताम् ॥ ३ ॥ कमलाकिङ्करीकोटिषेवि- ते नित्यभास्करे ॥ भक्तमानसगे नित्यं वर्धतां प्रेमवर्धताम् ॥ ४ ॥ चतुर्दोर्लतिके पाशसृणिबाणधनुर्धरे ॥ कस्मिंश्चिदरुणे धाम्नि वर्धतां प्रेमवर्धताम् ॥ ५ ॥ परमेश्वरानुभवे परमैकताङ्कते श्रुतिशेखरसंगीते वर्धतां प्रेमवर्धताम् ॥ ६ ॥ दयादृगन्तपातेनदलिताशेषकश्मले॥ परप्रेमास्पदीभूते वर्धतां प्रेमवर्धताम् ॥ ७ ॥ भक्तसंजीवने स्वच्छे सर्वानुल्लङ्घ्यशासने । स्मरणाच्छीघ्रवरदे वर्धतां प्रेमवर्धताम् ॥ ८ ॥ प्रेमाष्टकमि

दं प्रोक्तं प्रेमास्पदप्रसादतः । यः पठेन्मनुजः प्रेम्णा सहिप्रे
मनिधिर्भवेत् ॥ ९ ॥ इतिश्रीप्रेमाष्टकस्तोत्रं संपूर्णम् ॥

ॐ मातृकाप्रपंचरूपनादबिन्दुमयी विजयतेतराम् ॥

---

ॐ अखण्डानन्दिनी चाद्या इन्दुबिन्दुमुखीश्वरी ॥ ऊमोहा
पोहनिर्मुक्ता ऋरूपा ॠस्वरूपिणी ॥ १ ॥ ऌरूपाॡस्वरूपा
च एकानेकस्वरूपिणी ॥ ऐन्द्रीसुपूजिता ओंमित्यक्षरार्थस्वरू
पिणी ॥ २ ॥ औद्धत्यदैत्यदलिनी ह्यम्बिका अःस्वरूपिणी ॥
कमलानाथसंपूज्या खड्गखेटकधारिणी ॥ ३ ॥ गणेशजननी
घण्टानादत्रासितशात्रवा ॥ ङकराचरणापन्नविश्वत्रासविना
शिनी ॥ ४ ॥ छत्रचामरशोभाढ्या जलजन्मनिभेक्षणा ॥
झङ्कारनूपुराराविशोभनीयपदाम्बुजा ॥ ५ ॥ ञकाराक्षररूपा
च टकाराक्षररूपिणी ॥ ठस्वरूपा डस्वरूपा ढाकृतिर्णार्णरूपि
णी ॥ ६ ॥ तत्सद्रूपस्वरूपा च थरूपा दण्डिनीश्वरी ॥
धननाथसदासेव्या नरनारायणस्तुता ॥ ७ ॥ पद्मावाणीच
लम्बारुचामरावीजिताङ्घ्रिका। फट्कारमन्त्रमहात्म्यनाशितसर्वी
यशात्रवा ॥ ८ ॥ बलभद्रसमाराध्या भवभाग्या मदिष्टदा ॥
यमपाशभयत्रासनाशिनी रणशोभिनी ॥ ९ ॥ ललिताऌाप-
लीलाढ्या वरदानधुरंधरा ॥ शरदिन्दुनखज्योत्स्नाहतहार्दत
मोगुणा ॥ १० ॥ षडध्वातीतपादाब्जा सदा सर्वेष्टरूपिणी ॥
हंसमन्त्रमयी ळार्णा क्षकारान्त्यसुरूपिणी ॥ ११ ॥ क्षरूपा
ळस्वरूपा च सदासर्वेश्वरप्रिया ॥ षट्त्रिंशत्तत्त्वरूपाच
शरचापकराम्बुजा ॥ १२ ॥ वरुणोपासिताळक्ष्मीलालितां-
घ्रिसरोरुहा ॥ रमणीयपदाम्भोजा यज्ञरूपा महाप्रभा ॥ १३ ॥

यभावजनस्वान्त मणिद्दीपकृतास्पदा ॥ बलरामानुजार्च्या
फलद्भक्तिसुखप्रदा ॥ १४ ॥ परमेश्वराभेददात्री नमन्मु
विधायिनी ॥ धर्माधर्महविर्होतृप्रसन्नमुखपङ्कजा ॥ १५ ॥
डनीथस्त्ररूपाच तत्स्वरूपाणकारिणी ॥ ढरूपिणी डरूपा
ठरूपा टस्वरूपिणी ॥ १६ ॥ ञकारार्णस्वरूपा च झल्ल-
ादतोषिता ॥ जन्ममृत्युजराव्याधिनाशिनी छलवर्जिता
१७ ॥ चलन्मीनभयत्रस्तसारङ्गकमलेक्षणा ॥ ङकारवर्ण
ा च घटाकारवरस्तनी ॥ १८ ॥ गंगाधरसुखाधाररमणीय-
ष्मती ॥ खलदैत्यकृताहारा कलिकर्तव्यनाशिनी ॥ १९ ॥
स्वरूपा चान्नपूर्णा औन्नत्यपददायिनी ॥ ॐकारसर्वमन्त्रा
ऐँकाराचिन्त्यवैभवा ॥ २० ॥ एकाकारस्वरूपाच ॡका
ऌस्वरूपिणी ॥ ॠकारार्णा ऋस्वरूपा ऊर्ध्वाम्नायस्वरूपि
॥ २१ ॥ उत्राग्रदेवतारूपा ईरहस्यार्थरूपिणी ॥ इन्द्रपू
पदा राध्यरूपा द्वैतस्वरूपिणी ॥ २२ ॥ अखण्डानन्दिनी
पा चण्डिकाटस्वरूपिणी ॥ तारिणी पार्वती यज्ञस्वरूपा
ारूपिणी ॥ २३ ॥ अकारादिक्षरान्त क्षकाराद्यान्तनामक
॥ अष्टोत्तरशतंश्रेष्ठं सर्वेशायाःपठेन्नरः ॥ २४ ॥ नित्यंध्या
परांदेवीं सदातद्गतमानसः ॥ विश्वासेनत्वरासिद्धिर्मैहि
चापरांलभेत् ॥ २५ ॥ इतिश्रीसर्ववेदशास्त्रमयी मातृका
ालाऽष्टोत्तरशतनामावली समाप्ता ॥

---

ं हरिविरञ्चिनुतं शिवपूजितं परममङ्गलदायकमव्ययम् ॥
खिललोकनिवासपदं परं स्मरमनास्त्रिपुरापदपङ्कजम् १ ॥
ानभीतिहरं सुरभूरुहं त्रिविधतापहरं ममतापहम् ॥

त्रिसुरशक्तिसदासुखलालितं स्मर०॥ २ ॥ मुनिमनोमयको-
शयनंशिवं सकलसेव्यमलौकिकमद्भुतम् ॥ सकलतीर्थमयंसु
मनोहरं स्मर० ॥ ३ ॥ श्रुतिशिरोघृतमीप्सितमामकंशरणदं
शरणागतवत्सलम् ॥ सकलशास्त्ररहस्यमनन्तकं स्मर० ॥४॥
शृणिपविध्वजकञ्जसुलंकृतं नखमणिप्रभयाहततामसम् ॥ मम
तुभाग्यमहोद्भुतमक्षयं स्मर० ॥५॥ गुरुकृपाजनमानसभावितं
क्वणितनूपुरहंसकसंयुतम् ॥ चरणपत्रयुतंरसमण्डितं स्मर० ॥
६ ॥ निजजनेप्सितकामदमक्षरं युगलमद्वयमीशशिरःकृतम् ॥
प्रणतपालकपावनमच्युतं स्मर० ॥ ७ ॥ विलसिताष्टविभू
तिकरंनृणां जनिजरामरणार्त्तिहरंहितम् ॥ निगमसारतरं गुरु
पूजितं स्मर० ॥ ८ ॥ गृहकलत्रसुताःकिलबन्धनं तदनुरक्ति
रनन्तभयावहा ॥ त्यजविषं विषयं परमामृतं स्मर० ॥ ९ ॥
सकलहृत्सरसीरुहसंस्थितं ह्यपिजना नाविदुः सुखदायकम् ॥
गुरुवरोक्षितहृद्यवभासकं स्मर० ॥ १० ॥ निजजनैकशरण्य
महर्निशंक्वणितनूपुरभक्तसुखावहम् ॥ निजकृपासुखसेव्यमना
मयं स्मर० ॥ ११ ॥ समुदयद्रविकोटिसमप्रभं भवभयस्थि
तिसंहरणक्षमम् ॥ सकलदेवशिरस्कृतशासनं स्मर० ॥ १२॥
सकलबोधकरंजड़तापहं भुवनभासकभक्तवरप्रदम् ॥ विगतरा
गजनैकमनोहरं स्मर० ॥ १३ ॥ सकलयोगफलंगुणगौरवं गु
णविहीनविलक्षितवैभवम् ॥ गुणसुसृष्टहरादिकदैवतं स्मर०
॥ १४ गुणहरंगुणकारकमन्वहं गुणविहीनमशेषगुणाकरम् ॥
गुरुगरिष्टतरं गुणपूजितं स्मर० ॥ १५ ॥ परमशङ्करवल्लभसि
द्धिदं निजकृपानिजभक्तिसुखप्रदम् ॥ परतरंनिजभक्तमनोगतं
मर० ॥ १६ ॥ अलमलं व्रतयागसुकर्मभि रधिकखेदधनक्षय

कारकैः ॥ मम तु सम्मतमेकमिदं सदा स्मर० ॥ १७ ॥ स्तु
तिमिमामुपदेशवरां पठेत् चरणकंजपरायणमानसः ॥ भव-
ति वाञ्छितभाग्नरपूजितः सकलमातुरियात्पदमुत्तमम् ॥ १८ ॥
इति श्रीउपदेशषोडशीसप्तदशीस्तोत्रं संपूर्णम् ॥

ॐ अखिलसिद्धिकारिण्यैनमः ॥

ॐ यामाश्रिता भुवि जना भवसिन्धुनौकामुल्लंघ्य विश्वजल
धिं पदमक्षयंतत् ॥ गच्छन्त्यगाधमवबोधमखण्डरूपं तामीश्व
रीमखिलसिद्धिकरीं नमामि ॥ १ ॥ यन्नामकल्पतरुतोप्यधिक
प्रभावमप्रार्थितं त्रिदिवमोक्षफलं ददाति ॥ जिह्वाग्रगं भवतु
सन्ततमेतदर्थं तामी० ॥ २ ॥ यत्पादपङ्कजमनोहरभक्तियो
गो योगेषु संशयहरेष्वखिलेषु मुख्यः ॥ यंप्राप्यकेवलपदं मनुजः
प्रयाति तामी० ॥ ३ ॥ यत्पादसंश्रितजनः खलुदीनहीनो
लोकत्रितापरहितो भुवि चक्रवर्त्ती ॥ स्यादञ्जसाखिलगुणाकर
शुद्धभावस्तामी० ॥ ४ ॥ जानन्ति यां पशुजनाजगदेकरूपां
सच्चित्स्वरूपपरमां जगदादिभूताम् ॥ येज्ञानवन्तइहते सकले
ष्टदांवां तामी० ॥ ५ ॥ यत्पादपङ्कजमरन्दरसानुभावि सन्मा-
नसभ्रमरमत्तसमीहितं नो । स्यादन्यदत्रपरितिष्ठतिनिष्क्रियस्सं
स्तामी० ॥ ६ ॥ यत्पादपद्मरजसां कणमुत्तमाङ्गे येधारयन्ति
खलुतेचधृतातपत्राः ॥ अन्तेस्मृतिं परिलभन्त इहैवधन्या
स्तामी० ॥ ७ ॥ दासोऽस्मिते जननिजातभयंब्रुवन्तमेवं हि सा
भगवती करुणासमुद्रा । सद्योभयंदिशति विघ्नमपास्यदूरं तामी०
॥ ८ ॥ नीराजयन्ति चरणौ मुकुटप्रभौघैर्यस्यास्त्रितापहरणौ
द्रुहिणादिदेवाः ॥ श्रीशम्भुमानससरोवरराजहंसौ तामी०

॥ ९ ॥ यस्याःपदाब्जयुगलं सुरसिद्धसंघैः संसेवितंमुनिगणैश्च समाधिनिष्ठैः ॥ तन्मानसे ममसरोवरएवभूयात् तामी० ॥ १० ॥ एतत्त्रितापहरणं दशकं पठेद्यो नित्यंप्रभातसमये हृदि चिन्तयित्वा ॥ कारुण्यमूर्त्तिमभिषेचनिकां पराम्बां प्राप्नोत्य भीष्टमतुलं यदि भावयुक्तः ॥ ११ ॥ इति श्रीसकलसिद्धि करी स्तोत्रं समाप्तम् ॥

---

अथापराधक्षमापनस्तोत्रम् ॥

---

ॐ नदाराः कुमाराः सुहृद्बन्धुरीशे तथाभृत्यवर्गश्चमन्त्री न दासः भटोभव्यहेतुर्नजानेनृणान्ते पदंचारुसर्वेष्टदं भीतिह न्तृ ॥ १ ॥ प्रातः कृतिं शौचविधिं नजाने दीक्षाविधिं स्नान विधिं तथाहि ॥ सन्ध्यांत्रिकालेष्वपि तर्पणंचतुर्थीत्वदीयं शर णांगतोऽस्मि ।२। सूर्यार्घ्यदानं नशिवार्चनं च पूजाधिकारार्थं मवश्यमम्ब ॥ द्वारार्चनं विघ्नविनाशनं च परंत्वदीयं शरणं गतोऽस्मि ॥ ३ ॥ वास्तोःपूजांविधिना श्रीभैरवशासनग्रहणम्॥ भूशुद्धिंनहिकुर्वेत्रिपुरे शरणंगतस्तेऽहम् ॥ ४ ॥ आसनशुद्धिं पूजां नहिजाने श्रीगुरोःपूजाम् ॥ श्रीगुरुरूपिणिजाने त्वत्स्मर णंकेवलं शरणम् ॥ ५ ॥ कुंडलिनीशिवमेलनपरमानन्दप्रदं च नहिजाने ॥ भूतानांच विशोधनमनघे शरणंगतस्तेहम् ॥ ६ ॥ धातुप्राणस्थापनमीशे दशधाहिमातृकान्यासम् ॥ तद्वन्मू लन्यासं नचकुर्वेत्वंहिमेशरणम् ॥ ७ ॥ मूलस्यजपविधानं मन्त्रिण्याद्यंगदेवताजपनम् ॥ मातश्चरणंशरणं मेमूढस्यकेव लंपरमम् ॥ ८ ॥ श्रीपादार्चनपात्रविधानं नहिकुर्वेजगदीश्व

रिमातः ॥ अन्तर्यजनंस्वात्मीकरणम् जानेतेपदपंकजशरणम्
॥ ९ ॥ पीठार्चनं देवियथाविधानं नावाहनंतेजगदम्बमुद्रा ॥
संदर्शनंषोड़शधोपचारान् कुर्वे सदा ते शरणांगतोऽस्मि ॥ १०॥
आवृतिपूजां नाहं कुर्वेतेपञ्चपञ्चिकापूजाम् ॥ आम्नायानांपू
जां मूर्द्धाम्नायस्य केवलं शरणम् ॥ ११ ॥ उत्तरपूजांबहुलां
नोकुर्वेहोमबलिदाने ॥ नवदीपैरारार्तिकमीशे चरणंहिमे श-
रणम् ॥ १२ ॥ मातस्तेवैपादयोः पुष्पवर्षां पूजांते तेराजसानौ
पचारान् ॥ श्रीमच्छक्तेः पूजनंचेष्टदंते कुर्वेनोमेकेवलंत्वं शर-
ण्या ॥ १३ ॥ श्रीमद्गुरूणां परिपूजनं च पुष्पाञ्जलिंतर्पणमे
वमम्ब ॥ कुर्वेतथानोजगदम्बिकेते पादारविन्दंशरणंगतोऽस्मि
॥ १४ ॥ पूजान्ते ते मूलमन्त्रस्य जापं वर्मस्तोत्रं नामसाह
स्त्रकंच ॥ नानास्तोत्रैर्तेप्रसादैकहेतुम् कुर्वेनो मे केवलं त्वं श-
रण्या ॥ १५ ॥ प्रदक्षिणान्तेपदयोर्नमस्कृतिं साष्टाङ्गरूपां बहु
धामहेश्वरि ॥ क्षमापनं चैव पुनःपुनर्नाहंकरोमिमातः शरणंग
तोऽस्म्यहम् ॥ १६ ॥ स्वान्तर्होमं शाक्तिकैःसाकमम्ब प्रौढो
ल्लासंसर्वकर्मार्पणंते ॥ स्वात्मोद्वासंतेज सस्तेशरण्ये श्रीमातङ्गि
पूजनं न क्षमस्व ॥ १७ ॥ श्रीभैरवस्यैव बलिं चशान्तिकृत्
स्तवंपठन्साधकप्रोक्षणंचते ॥ करोमिनाहंपरमात्मरूपिणि य-
थातथा ते शरणंगतोस्म्यहम् ॥ १८ ॥ विलोकनं स्वस्यदशा
विशेषं यथाविधानं विनियोजनंच ॥ पात्रस्य पूर्णाहुतिमम्ब
नित्यं कुर्वेनमातः शरणांगतोऽस्मि ॥ १९ ॥ त्रिदेवरूपस्य तु
भास्करस्य ह्यर्घ्यंनकुर्वेखिलपूजनान्ते ॥ त्वदीयनाम्नैवचसर्व-
पूजाकृतिंप्रपूर्णां विदधेशरण्ये ॥ २०॥ प्राणायामंविधिना नो-

कुर्वेकामकूटेन ॥ पुष्पंतवनिर्माल्यं शिरसिशरणयात्वमेवैका ॥ २१ ॥ कामकला तव रूपं स्वात्माभिन्नं विभावयन्विहरे ॥ नैवच नित्यं मातर्यथासुखंचरणशरणंमे ॥ २२ ॥ मातश्चेश्वरमूर्त्तयोविधिमुखा देवास्त्रयस्तेऽपिहि कृत्वाभारसमर्पणं समभवन्सौभाग्यभाजोऽचिरात् ॥ ज्ञात्वेत्थंमनसाबलेनवचसा कायेनतेकर्मणा दोस्तंभेषुचतुष्टयेषु सततं मद्गेहभारोर्पितः ॥ २३ ॥ इति क्षमापनस्तोत्रं सदापठतियोनरः ॥ स्वीयानुभावेनपरा प्रसन्नास्यात्कृपानिधिः ॥ २४ ॥ इतिश्रीअपराधक्षमापनस्तोत्रं संपूर्णम् ॥

---

श्रीमतीसकलमनोरथातिशयचरणदर्शनमनोरथप्रपूरिणीविजयतेतराम् ॥

---

द्रक्ष्येकदानुमातर्वात्सल्येनैव सम्मुखेतिष्ठन् ॥ इष्टांविदद्भक्तिं तंचरणांहिसर्वशंमह्यन्ते ॥ १ ॥ तवपदयुगलीं संमुखमायांतीमम्बकथयन्तीम् ॥ नूपुरनादमिषेणाहि कामाक्ष्यभयंकदाद्रक्ष्ये ॥ २ ॥ वाणीमानसदूरां पदद्वयीभक्तकामनापूराम् ॥ इत्याद्यागमगीतां नेदिष्टांमातरपिकदाद्रक्ष्ये ॥ ३ ॥ युगलंतेपदकमलं समलं मामम्बमलंविनाकुर्वत् ॥ प्रभयास्वया वितिमिरं रूपांवुनोधारया कदा द्रक्ष्ये ॥ ४ ॥ केवलकृपावशेनहि न तुमे कृत्येन कामाक्षि ॥ मधुरं रणयन्नूपुरमम्ब पदंते कदा द्रक्ष्ये ॥ ५ ॥ येन विना न भवन्ति हि साकं ब्रह्मादिभिर्लोकाः ॥ तत्पदयुगलं मातर्ब्रह्मादिविधानकृत्कदा द्रक्ष्ये

॥ ६ ॥ यदुपासनाविहीनादेवाब्रह्मादिकाःसर्वे ॥ कार्यं कर्तुमशक्तास्तत्पदयुगलं कदा द्रक्ष्ये ॥ ७ ॥ शिशवेक्षुधार्दिताय प्रसूस्तनं राति रुदिताय ॥ तद्वत्ते पदयुगलं ह्यम्ब कदा दर्शयिष्यसि मे ॥ ८ ॥ भर्त्ता स्वधर्मनिरतां सुखयत्यागत्य दूरस्थाम् ॥ धर्मज्ञोहि तथा मां दर्शनदानेन ते पदाम्बुजयोः ॥ ९ ॥ विरहातुराहि कांता निजेप्सितं प्राप्य मुदं भर्त्तारम् । मातः प्रयाति तद्वद् द्रष्ट्वाशु पदं मुदं कदा लप्स्ये ॥ १० ॥ क्षुत्तृड्व्यसनितबालो निजजननी स्तन्यपानेन ॥ सुखमनुभवतितथाऽहं तवपददर्शी सुखीकदाम्बस्याम् ॥ ११ ॥ मूर्द्धानमलं कर्तुं चाधायद्वेदपुरुषोऽपि ॥ पदयुगळं ते मातर्मुकुटतयाहं कदाद्रक्ष्ये ॥ १२ ॥ विरचति पाति च हरतिहि विधिर्हरिस्त्र्यम्बकोम्बैतत् ॥ विश्वं यत्सेवनया पदयुगलं तत्कदाहि ते द्रक्ष्ये ॥ १३ ॥ अज्ञानावृतहृदये नखमंडलचंद्रमःखंडैः ॥ ज्योत्स्नावद्भिर्मातः पदकमलं ते कदाद्रक्ष्ये ॥ १४ ॥ यदुपासकाभवाद्याःसंत्यखिलेशास्त्रिदेवताजगति ॥ तत्पदयुगलंकृपयाँ विनिमिषदृष्ट्या कदाद्रक्ष्ये । १५ । वांछाधिकप्रदानात् खर्वीकृतकल्पवृक्षं यत् ॥ कान्त्योद्यन्तं भानुं ह्रस्वकरं ते पदं कदाद्रक्ष्ये ॥१६॥ नखकान्त्यंतर्वर्त्ति तमोहरं चाभिषेचानिकम् कामशतादधिकं मे प्रेयोमातः पदं कदा द्रक्ष्ये ॥ १७ ॥ त्वदुपासना जनानां भाति समस्तं तवैव रूपं तत् चिन्मात्रं स्वानन्यं तत्पदयुगलं कदाद्रक्ष्ये ॥ १८ ॥ मूकः कवयति रंकोभूपति वृद्धोह्यनंगइवाचरति ॥ यत्पदयुगलकृपातस्तद्रूपं ते कदा द्रक्ष्ये ॥ १९ ॥ सर्वेश्वरसाम्राज्ञि जातिविभिन्नं पदं

न दर्शयसि ॥ मामम्ब निरंतरं हि बुद्धिकुमारीं तु सहचरीं
कुरुते ॥२०॥ संविन्मात्रमनन्यं चैकमनंतं गृहीतगुणरूपम् ॥
भूरिकृपं पदयुगलं दृक्पथिकृत्वा मुदं कदा लप्स्ये ॥ २१ ॥
दृश्यस्तथापि साक्षी शनैश्चरोभानुरिवाभाति ॥ आरक्तोऽपि
हि शुक्लोह्यंघ्रिस्ते दृक्चरोभूयात् ॥ २२ ॥ रक्तोविरक्तिदाता
ह्यद्वयरूपोऽपि युगलात्मा ॥ चित्रं कुर्वंश्चरणो दृङ्मा
र्गे स्यात्सदैवसुखदाता ॥ २३ ॥ यच्चरणांबुजमधुना मत्ताविः
स्मृत्य देहगेहादीन् ॥ लीनास्तस्मिन्नेवहि सन्तिशिवायाः
पदं कदाद्रक्ष्ये ॥ २४ ॥ कुवलयबंधुमुखेनहि स्मितचंद्रिक-
या प्रतोषितं कुर्वंत् ॥ स्वान्तर्वर्त्ति स्वान्तं रूपं शश्वत्कदावि
के द्रक्ष्ये ॥ २५ ॥ वरदानायायान्तीं क्वणयंतीं नूपुरे पदयोः ॥
स्वान्तं शीतलयन्तीं माध्व्या गिरया कदा द्रक्ष्ये ॥ २६ ॥
सूनो गृहाण भक्तिं मद्विषयामिष्टरूपान्ते ॥ इति मां पदयोः
पतितं भाषन्तीं त्वां कदा द्रक्ष्ये ॥ २७ ॥ आढ्यं यदेवभाव्यं
भुक्तिं मुक्तिं समीहद्भिः ॥ दृश्यं मृग्यं गेयं ते पदयुगलं कदा
म्ब संद्रक्ष्ये ॥ २८ ॥ हरिहरगणेशदुर्गाभास्करभक्ताः ससारा
ध्य ॥ स्वेष्टत्वेन यदेवहि यान्ति पदं तत्कदाद्रक्ष्ये ॥ २९ ॥
दृक्पथि कदानु कुर्वे अम्बैकत्वेन पृथक्त्वेन ॥ जगतोयत्त्वच्च
रणं तिष्ठति मेनौमि सदा मनसि ॥ ३० ॥ यस्याश्चरणस-
रोजद्वयपूजनतोनृणां हि हृदयेया ॥ शीघ्रंस्फुरति सतांतांद्रक्ष्ये
नुकदाशिवोक्तमार्गेण ॥ ३१ ॥ यस्मिन्नुदयति भाति त्रि
यामिनीपंचपर्वाणो ॥ रविसमरोचिषि चरणे तमहंमातः कदा
द्रक्ष्ये॥३२॥त्वद्विरहितं हि मोक्षं स्वाराज्यं किमुत साम्राज्यम् ॥

रविसमरोचिषि चरणे तमहं मातः कदा द्रक्ष्ये ॥ ३२ ॥ त्वद्विरहितं हि मोक्षं स्वाराज्यं किमुत साम्राज्यम् ॥ नेच्छंति त्वद्भक्तास्तां त्वां मनसि हि कदा द्रक्ष्ये ॥ ३३ ॥ यद्विहितं प्रतिकर्तुं प्रभवोनो वै विधात्राद्याः इत्यध्यवसाय्यम्ब त्वत्पदयुगलं कदा द्रक्ष्ये ॥ ३४ ॥ विषमे शत्रुत्रस्तैः स्मृता भयध्वंसकरी भवति ॥ यस्याःपदयुगलं तत् दृङ्मार्गे मे कदा भवतु ॥ ३५ ॥ चरणनखेंदुज्योत्स्नासंहतवत्यंतरीयतमः ॥ शीतलयंती हृदयं यातामीशां कदा द्रक्ष्ये ॥ ३६ ॥ भग्ने जलधौ पोते महाभये तारिणि त्राहि ॥ वदति स्वीये लोके रक्षति या तां कदा हि संद्रक्ष्ये ॥ ३७ ॥ जनयति रागं शंभोर्मनसि मुनीनां स्वरूपसंपदया ॥ वैराग्यमाशुचित्रं तां त्वामम्बां कदा द्रक्ष्ये ॥ ३८ ॥ शंभोरीक्षणकुवलयचंद्रसमानां शिवांकगृपदीपाम् ॥ मानसमीनपयोनिधिरूपांतां त्वां कदा द्रक्ष्ये ॥ ३९ ॥ असमशरागमसारं सिद्धांतं सकलनिगमसालाम् ॥ भक्तमनोरथमेकं सुकृतफलं चेशितुः कदा द्रक्ष्ये ॥ ४० ॥ प्रसन्नशीतलसलिले सरसि सखीभिश्चे खेलंती ॥ पद्माकरे ज्वरघ्नी भवति ध्याता कदा हि तां द्रक्ष्ये ॥ ४१ ॥ या भरणवसनमाल्यैः कुंकुमकस्तूरिकादिकैरंकैः ॥ कृष्णावतंससुषुमां भजति भवानीं कदा द्रक्ष्ये ४२ ॥ शारदचंद्रसवर्णा हस्तैः स्फटिकाक्षमालिकां दधती ॥ पुस्तकमभीतिदाने विद्यादां तां कदा द्रक्ष्ये ॥ ४३ ॥ याखिलमाता गिरिजा ह्यनाद्यनंता वियोगसंयोगा शंभोः पाणिगृहीता चित्रचरित्रा कदा द्रक्ष्ये ॥ ४४ ॥ याविष्करो यागे

लुप्तानंदं स्वरूपसंभूतम् ॥ साक्षात्शक्तिसुरूपा शिवसुखदां
तां कदा द्रक्ष्ये ॥ ४५ ॥ परमामृतस्वरूपां समये संसेवितां
शुध्या ॥ वृत्यानंदभुवं तां स्वात्मनि नित्यं कदा कुर्वे ॥ ४६ ॥
श्रीमत्पादतलादिहि मुखचंद्रांतं सदाभजताम् ॥ पुंसां स्वरू-
पमतुलं यास्त्याविस्तां कदा द्रक्ष्ये ॥ ४७ ॥ धत्ते वदने
शशिनः सौभाग्यं शंभुसद्भाग्यम् ॥ चातुर्यं भौधर्यं कुच-
योर्यत्तत्कदा द्रक्ष्ये ॥ ४८ ॥ कुचयोः क्षीरनिधित्वं करकंजेषु
च निलिंपविटपित्वम् ॥ येन धृतं तद्रूपं नाथकृपातः कदा
द्रक्ष्ये ॥ ४९ ॥ मन्ये यत्तद्रूपं हृदि विन्यस्तं शिवेतिसौंद-
र्यम् विस्मारयति हि विश्वं मादकमीशे कदा द्रक्ष्ये ॥ ५० ॥
दीनं दयार्द्रदृष्ट्या स्वाभाविकया विलोक्य निजभृत्यम् ॥
कल्याणाय जनस्यहि कुर्वतींत्वां कदा द्रक्ष्ये ॥ ५१ ॥
अंधेतमासिद्युमणिं पूर्णचंद्रेप्रफुलितं कमलम् ॥ तास्मिन्नूम्यं
रावं विरचातियातांकदाद्रक्ष्ये ॥ ५२ ॥ सूर्यस्तमसिशशांक-
स्तस्मिन्नुच्चलितमीनयुगलं या ॥ तत्ररसंतेनैवहि स्थाणुं
फुल्लयतिदृश्यास्यात् ॥ ५३ ॥ विश्वजयीमदनोसौ विजतःप्रभु-
णाशिवेनयेनचसः ॥ भ्रूभंगेणहिविजितो ययाकयाचित् कदा
द्रक्ष्ये ॥ ५४ ॥ यदनुग्रहरससिक्ता फलतिमदीयेहितालतिका
तन्माहेश्वरभाग्यं संवीक्ष्याहंनुकदा तृप्तःस्याम् ॥ ५५ ॥ या-
माश्रित्यहिकृष्णो रंतुंषाण्मासिकीं रात्रीम् ॥ शुक्रांचकारतां
त्वामघटनघटनांकदाद्रक्ष्ये ॥ ५६ ॥ नृपतिकुद्धैर्दस्युत्रस्तैः
दावाग्निसंवीतैः ॥ रक्षतिरोगग्रस्तैः स्मृतासतीतांकदाद्रक्ष्ये ५७
रूपांतरंत्वदीयं सिंहगतंखड्गचक्रशूलधरम् ॥ प्राथमिकंमदुपा-

स्यं पात्रधरंतत्कदाद्रक्ष्ये ॥ ५८ ॥ रूपंतवातिवल्लभमस्मदुपा-
स्यंसौकुमार्यम् ॥ पुस्तकमालाभयवरधारि कदाहंसदाद्रक्ष्ये
॥ ५९ ॥ अतिवल्लभातिवल्लभरूपं शृणिपाशचापकरम् ॥ द्रक्ष्ये
कदासदाहंकारुण्यं सौकमार्य्यंतारुण्यम् ॥ ६० ॥ त्रिभुवन
मणिगृहधामां निरवधिकैश्वर्यरूपगुणानामाम् ॥ ६१ ॥ तां
सुरवृक्षारामां कांचनवामांकदाद्रक्ष्ये ॥ ६१ विषयैषिणांच
विषयं त्रिपुरेहृदयेसदावसति ॥ तद्वत्तेपदयुगलं हृदयेमेनुदिनं
कदानिवत्स्यति ॥ ६२ ॥ सच्चिद्रूपमनंतं चैकमखंडंहि ज्ञा
निनांभाति ॥ यत्पादार्चनतोया तामंबांत्वांकदाद्रक्ष्ये ६३ ॥
विष्णुर्लक्ष्मीरस्तिहि याब्रह्माचैवसावित्री ॥ रुद्रोरुद्राणीतां
सुरमणशीलां कदाद्रक्ष्ये ॥ ३४ ॥ सौंदर्यमकरंदंवदनांभोज
स्ययस्यास्ताम् ॥ मायंतिनयनभृंगाः पीत्वाशंभोःकदाद्रक्ष्ये
॥ ६५ ॥ पीत्वापिनैतितृप्तिं मदनारेर्नेत्रभृंगाली ॥ वदनाम्बु-
जस्ययस्यामधुसौंदर्यं कदाद्रक्ष्ये॥ ६६ ॥ अनुपमशीतलसुभ-
गछाये पादाम्बुजेशीर्षे ॥ यस्याःसुकृतेकिमपिहि सुखमातुलि-
कंकदैतितांद्रक्ष्ये ॥ ६७ ॥ यस्याहृगंतरात्रौ संविन्नारीसुख
प्रदाभवाति ॥ तरुणविरागिनरस्यहि भवनौचरणांकदाद्रक्ष्ये ॥
६८ ॥ सफलंनयनंजनुरपि सुकृतं सफलंहिममभाग्यम् ॥
अभिषेचनिकंरूपं दृष्ट्वांबायाःकदाकुर्वे ॥ ६९ ॥ यस्यांमनोनु
बद्धं ब्रह्मोपेन्द्रादिकान्देवान् ॥ हित्वाममपदयुगले त्वामखिले
श्यम्बकदाद्रक्ष्ये ॥ ७० ॥ पुरतःकदानुकुर्वे योगीश्वरलभ्यम-
विशेषम् ॥ नीचस्तत्कृपयाहं निरवधिकैश्वर्ययावस्तु ॥ ७२ ॥
सच्चिन्मात्रमनन्यं विश्वाधारंसमस्तविश्वमयम् ॥ निर्गुणमम्ब-

तद्देवहिसगुणंरूपं कदाद्रक्ष्ये ॥ ७२ ॥ यस्याःकृपामहिम्ना मूकःकश्चिद्भिकविसम्राट् ॥ जातःकांचिनगर्यां मद्भुतचरितां कदाद्रक्ष्ये ॥ ७३ ॥ कल्पलतांकामरेः कुचफलफलितां सुहस्त पल्लवितान् ॥ सुरभिमुखाब्जसुफुल्लां द्रक्ष्ये करुणारसोपेताम् ॥ ७४ ॥ अंतःसौषुम्णांत श्चामूलाद्ब्रह्मरंध्रांतम् ॥ ज्योतिर्लेखेवसतां यातांभातिहि कदाद्रक्ष्ये ॥ ७५ ॥ भंडासुरमहिषासुर शुंभनिशुंभादिसंहंत्री ॥ याश्रीललितामाता हृत्कमले तांकदाद्रक्ष्ये ॥ ७६ ॥ पुंभावेदंभावं विरचतियातां बलादेव ॥ दिव्येभव्येसव्ये प्रणयेनमुदाकदाद्रक्ष्ये ॥ ७७ ॥ प्रजयेयाहरिमाह श्लोकार्द्धेनौपनिषदात्म्यम् ॥ सकलंभागवतार्थं तांप्रेम्णाहंकदाद्रक्ष्ये ॥ ७८ ॥ मंदस्मितेनयस्याः समतांज्योत्स्नासुधानसंयाति ॥ प्राकाश्येमाधुर्येशैत्ये गंगाकदाहितांद्रक्ष्ये ७९ ॥ स्वजनंरक्षणकामा स्मेरविभूतिंहि दिक्षुविक्षिपति ॥ शिवायद्दाशियासास्याद्भूस्तं तृष्णापिशाचिन्या ॥ ८० ॥ स्वाभाविकाभिरामां त्रिभुवनधामांशिवांकमणिधामाम् ॥ श्यामां कांचनरामां सुललितनामांकदाद्रक्ष्ये ॥ ८१ ॥ स्वचरणशरणजनानां त्वरितंकार्य्यंकरोत्यस्मात् ॥ त्वरितांनित्यंनाम्ना ख्यातायातांकदाद्रक्ष्ये ॥ ८२ ॥ नित्यंक्लिन्नंहृदयं यस्याःकृपयाच भक्तेषु ॥ नित्यंक्लिन्नास्तीति ख्याताहंतांकदाद्रक्ष्ये ॥ ८३ ॥ नीचंबुद्धिविहीनं कृपणंचापल्यसंयुक्तम् ॥ यद्यप्यवगुणसिंधुंया मांपुष्यातिकदाहितांद्रक्ष्ये ॥ ८४ ॥ पीयूषार्णवमध्ये हेमगिरौ कल्पभूरुहारामे ॥ चिंतामणिगृहवसतिर्यस्यास्तांस्वांकदाद्रक्ष्ये ॥ ८५ ॥ तल्पेपरमशिवाख्ये मञ्चेयाब्रह्मपञ्चके ॥ मुदिताद्र-

क्ष्येकदास्थिता तां कामेश्वरयंत्रितासुतराम् ॥ ८६ ॥ पुरट
मयांकुशपाशौ सुमनोबाणौक्षवंचापम् ॥ कराम्बुजैः संदधतीं
स्मेरमुखीं त्वांकदाद्रक्ष्ये ॥ ८७ ॥ नानागुणावतारां नानानंद
विधायिनीमबाम् ॥ नानाचित्रचरित्रां भवभयनाशांकदाद्रक्ष्ये
॥ ८८ ॥ यत्पादोद्भवपांशुं शिरसिचधृत्वाविधिर्विष्णुः ॥ रुद्रः
स्रष्टापाता संहर्त्तातांकदाद्रक्ष्ये ॥ ८९ ॥ मनुभुवनानुल्लंघ्य हि
प्रकारकैःशोभतेसर्वैः ॥ ललिताख्यातातस्त्वां यातामम्बांकदा
द्रक्ष्ये ॥ ९० ॥ स्वात्मस्वरूपिणीया संवित्कामेश्वराभिन्ना ॥
प्रेष्ठास्पृहणीयाता मरुणामीशांकदाद्रक्ष्ये ॥ ९२ ॥ यद्वेदैरपि
गीतं भेदविहीनंपरंतत्वम् ॥ तदहंजानेशोणं धामकदाहंसदा
द्रक्ष्ये ॥ ९२ ॥ यत्संतुष्ट्यैहरिरपि मात्स्यंरूपंचकारासौ ॥
नृत्यतिहरःपुरस्तात् तामखिलेशींकदाद्रक्ष्ये ॥ ९३ ॥ यस्याः
कृपाकटाक्षात् विषमप्यमृतायतेतस्याः ॥ द्रक्ष्येकदानुपादौ
योगोभोगायतेपुंसाम् ॥ ९४ ॥ रक्षाविधौहिसत्यपि विमुखा
यस्यानराक्षिताःसंति ॥ सुखिनोभवंतिपुरुषाः शरणगतास्तां
कदाद्रक्ष्ये ॥ ९५ ॥ ऊर्द्धोलोकोवदनं मध्यांगमध्यलोकश्च ॥
यस्याजघन्यमंगं ह्यतलादिस्तांकदाद्रक्ष्ये ॥ ९६ ॥ नयनेके
चिद्यस्यास्ताटंकावृषिजनाःपरेचाहुः ॥ सूर्याचंद्रमसौतां व-
क्षोजावपरेचकदाद्रक्ष्ये ॥ ९७ ॥ कापुरुषोपिदरिद्री सदग्रणी
विश्वविख्यातः ॥ यस्याःकटाक्षपूतो भवतिकदाहंचतांद्रक्ष्ये
॥ ९५ ॥ यस्याअरुणिमतेजो विनिमग्नान्साकमात्मनासा-
ध्यान् ॥ ध्यायन्तियोहितेषां वश्यास्तेतांकदाद्रक्ष्ये ॥ ९९ ॥
सुख्यातिचरित्रमस्याः कर्णौरूपंचनेत्रेच ॥ निरतिशयंहृदयंता

मानंदांवांकदाद्रक्ष्ये ॥ १०० ॥ अग्नावौष्णंपुरुषे चेतनता स्वादुतासलिले ॥ यास्तिज्योत्स्नाचंद्रे भवसारांतांकदाद्रक्ष्ये ॥ १०१ ॥ विश्वातंकत्रस्ते यस्यानामामृतौषधंदत्वा ॥ सद्गुरुभिषग्वरस्तां सुखयतिनितरांकदाद्रक्ष्ये ॥ १०२ ॥ कामकलोर्द्धगबिन्दु वदनंलिपिगौतुवक्षोजौ ॥ तस्यायस्याहार्धं जघनाद्यंगंकदाहितांद्रक्ष्ये ॥ १०३ ॥ अंजनवतीहियातां रागवतीनिरजनीइवेता ॥ हंसीकृतनिजदासा नवगतचारांकदाद्रक्ष्ये ॥ १०४ ॥ भवभयभंगव्यसनां हीरकदशनांप्रकाशमद्दसनाम् ॥ तारुण्येनोल्लसनां वाणीरसनांकदाद्रक्ष्ये ॥ १०५ ॥ नेत्रेभूयान्मनसिच रूपंयन्निर्गुणंसगुणाम् ॥ चरणौशिवादिवंद्यौ शीर्षेमेतेसदास्याताम् ॥ १०६ ॥ व्योमादिमनोभवादि विद्यारूपांशिवैकसंवेद्याम् ॥ पूर्णांपरांपरेशीं निजकृपयात्वांकदाद्रक्ष्ये ॥ १०७ ॥ एकावर्णमयूखैस्संसाराभिन्नचक्रेस्वे ॥ व्याप्यसदायातिष्ठति चक्रमयींतांकदाद्रक्ष्ये ॥ १०८ ॥ यस्या भजनमहिम्ना वाणीकांतश्चकमलापः ॥ रतिप्रयोपिज्ञानी भवतिकदातांसदाद्रक्ष्ये ॥ १०९ ॥ ऋग्यजुरादिकवेदा स्तेऽपि विदान्तिप्रसोर्नयत्तत्त्वम् ॥ हरिहरविरंचयोपिहि तामलमंबां कदाद्रक्ष्ये ॥ ११० ॥ प्लवंसंसाराब्धेः स्वजनतरणायातिसुदृढम् महामोहध्वांतव्ययविधिविभास्वद्रविनिभम् ॥ त्वदीयानांतापप्रशमनधुरीणांशिवनुते कदाद्रक्ष्ये मातस्तवचरणपङ्केरुहयुगम् ॥ १११ ॥ यस्यांस्थापितमम्वत्वयिकामक्रोधतम्करत्रस्तैः ॥ मानसरत्नसमूहम्मुनिवरसंघैर्मयाऽपितत्रैव ११२ ॥

इतिश्री आर्याभिलापाष्टोत्तरशतकं समाप्तम् ॥

श्रीमत्यै त्रिपुरसुन्दर्यै नमः ॥ भूतापराधसमनैकशुभस्व-
भावस्वाभिख्यजापकजनस्वपदप्रदायाः। संसारजाड्यगरिम-
प्रसरार्कतुल्य पादारविन्दुयुगलंमृदुलंनतोस्मि ॥ १ ॥ भक्ता-
र्त्तिभंजनकरैकविचक्षणाया लीलालसल्ललितनूपुरलाक्षितायाः
आनन्दसिन्धुपरिमग्नसुसाधकाया श्चैत्यंपदाब्जयुगलंहृदिमे
सदास्यात् ॥ २ ॥ पादारविन्दनखचंद्रमसःप्रभाभि र्ध्वांतंधु-
नोतुधरणीधरराजकन्या। स्वीयाभिरंतरलमिक्षुशरासनांस्वां
मूर्तिंपरामृतमयींप्रकटीकरोतु ॥ ३ ॥ वाटीवसंतस्यनभो
घटाली शरत्प्रभेंदोःपरिपूर्णकस्य। लोकोत्तराकापिमदीयने-
त्रात् कदापिमासर्पतुदैवयोगात् ॥ ४ ॥ भालस्थलेचरणकंज
परागमस्तु शीर्षंचतेचरणपंकजयोर्ममास्तु। श्रीमच्छशांकव-
दनेत्रिपुरेत्वदीया मूर्त्तिःसदावसतुहृत्कमलेमदीये ॥ ५ ॥ धाम्ने
त्रिलोकधाम्ने परिमितनाम्नेऽतिचैत्याय। प्रस्फुटललितानाम्ने
कारुण्यायलुभ्यते मेचेतः ॥ ६ ॥इतिश्रीललिताचरणारविन्द-
स्तुतिषट्पदीसमाप्ता ॥

---

श्रीमती स्वमहिम्नाकृपाम्बुधारावर्षिणीमेशंविदधातु ॥
स्त्रीणांकामस्तवचरणयोर्चित्तहारीव मात मध्यान्हार्कोयइव
भवतिध्यानकृद्दीप्तिमान्सः ॥ वाणीस्फूर्त्तौधनविलसने ज्ञान
विज्ञानयोर्वै। बृह्माविष्णुःशिवइवनरः सर्वदेवाग्रगण्यः १ ॥
नृणामीशेजगतिपरमाल्हादकारीपदार्थः सौर्यंवीर्यंबहुधनगृहं
सुन्दरस्त्रीसुविद्या ॥ पादाम्भोजेभवतिसकलो भक्तिभाजांतवैव
श्यामेमातस्तवकरुणया यस्तुनस्यात्सनस्यात् ॥ २ ॥ माता
त्वंमेसकलजननित्वंसुहृद्विश्वमित्रे नाथात्वंमेत्रिभुवनभरे वि-

स्वशिष्येगुरुस्त्वम् ॥ काचिंतामेस्मरणसुखदेचैहिकीपारलोकी चिंतारत्नेनिजकरकृते चिंतनंकिंधनस्य ॥ ३ ॥ रत्नत्रयमिदं स्तोत्रं पठेद्भक्त्यैकमानसः । ध्यात्वाम्बांकृपयास्तस्या स्स्तोत्रो-क्तेष्टमवाप्नुयात् ॥ ४ ॥ इतिश्रीरत्नत्रयस्तोत्रं समाप्तम् ॥

श्रीमतीदयार्द्रहृदयाविजयतेतराम् ॥

---

नत्वापरात्परतरेपदपङ्कजंते याचेमनोरथशताधिकमेक-मेव ॥ प्राणप्रयाणसमयेममचित्तवृत्तिः पादाब्जयोश्चनितरां स्थिरतांविधत्ताम् ॥ १ ॥ नत्वाम्बिकाचरणकल्पतरूसदाहं छायाभरेणजनतापहरौशरण्यौ ॥ प्रेमोरुमिष्टरसभक्तिफलाय याचे संसारतापपरितप्ततनुःसुखार्थी ॥ २ ॥ जगत्समुद्रेपरि-मज्जतःपरे नौकाद्भुताविश्वसमुद्रतारिणी ॥ कामादिनक्रादि-भयापहारिणी प्रतिक्षणंमेस्मृतिरस्तुतावकी ॥ ३ ॥ शिवाय विघ्नौघविनाशकारिणी भक्तस्यतेज्ञानतमोपहारिणी ॥ कुबु-द्धिमार्गेपतितांसुयष्टिका प्रति० ॥ ४ ॥ विश्वाटवीखिन्नपद प्रदायिनि दैन्यच्छिदेकल्पलतासुखावहा ॥ गंगासमानामलना-शकारिणी प्रति० ॥ ५ ॥ यामीयदूताऽभयकारिणीया सा युज्यमुक्त्येकनिमित्तभूता ॥ परामृतासारसुखैककर्त्री भूयात् स्मृतिस्तेपदकञ्जयोर्मे ॥ ६ ॥ अनेकजन्मार्जितपुण्यसंचयैर्ल-भ्याकृपातेजगदम्बसत्फला ॥ तयामनःसंस्मरणावलम्बिमे प्रतिक्षणंस्याच्चरणारविंदयोः ॥ ७ ॥ श्रीचरणस्मृतिदायकस-प्तकमेतत्पराम्बायाः ॥ प्रेमीपदपङ्कजयो रतिर्नरःस्वेष्टमाप्नो ति ॥ ८ ॥ इतिश्रीसदान्तकालेचस्मृतिदायकंस्तोत्रं समाप्तम्

श्रीमतीनिजकृपानिजस्मृतिदायिनी विजयतेतराम् ॥

मातः शिवे सकललोकनिवासभूमे शंभोः परात्परतरस्य मनोविहारे ॥ भक्तानुकंपिनि कलानिधिशेखरे मे ह्यंते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ १ ॥ कल्पानुजीविनिजभक्तमृकण्डसूनुगीतप्रभावबहुलश्रवणे रतानाम् ॥ कामप्रपूरिणि नृणां शिवकामधेनो ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ २ श्रीचिद्घने गुरुतमे गिरिराजबोधसन्मानदानकुशले निजलाभपूर्णे ॥ आनन्ददायिनि दयादलिताऽघराशे ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ ३ ॥ लीलाहृताऽखिलसुरेन्द्रमहारिवृन्दे लीलेच्छया कृतसमस्तजगद्विधाने ॥ भक्तप्रसादपरतंत्रतमारमूर्ते ह्यन्ते स्मृति र्भवतु ते पदपङ्कजस्य ॥ ४ ॥ श्रीमत्सुधाब्धिविलसद्गृहराजनाथे कोटीन्दुसूर्यसमशोभितदेहकान्ते ॥ पाशाङ्कुशेक्षवशरासनबाणहस्ते ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ ५ ॥ भक्तार्तिहन्त्रि भवरोगविनाशकर्त्रि ज्ञानप्रकाशमयि मालिनि मंत्रमूले कामेश्वरि त्रिदशनायकनायकेऽशि ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ ६ ॥ स्मेरानने स्मरजये जगतां निदाने शीतांशुसुन्दरमुखि स्मरशम्भुरूपे ॥ पातालमूलचरणेऽव्ययशीर्षरूपे ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ ७ ॥ वैश्वानरेन्दुरविलोचनिविश्वरूपे ब्रह्मप्रपंचमयि तारिणि ताररूपे ॥ साम्राज्यमुक्तिमयि मंगलमंगले मे ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य ॥ ८ ॥ क्षिप्रप्रसादिनि वरासनि सौम्यरूपे सारंगरागसुखदे शरणार्थदात्रि ॥ गंगाधरार्चितपदद्वयि विष्णुपूज्ये ह्यन्ते स्मृतिर्भ-

वतु ते पदपङ्कजस्य ॥ १ ॥ पद्मप्रभूतसनकादिकयोगिवर्य-
स्वान्ते विराजितपदे प्रणतार्तिनाशे ॥ भीतार्तिभञ्जिनि
विभासिनि विश्वमातर्ह्यन्ते स्मृतिर्भवतु ते पदपङ्कजस्य११ ॥
अन्ते स्मृतिप्रदमिमं स्तवराजम्व यस्तेपठेत् प्रयतमानस एव
भूत्वा ॥ तस्येश्वरि प्रपदपङ्कजयोः प्रसादादन्ते स्मृतिर्भवतु
मङ्गलदेवतायाः ॥ ११ ॥ इति श्रीपराम्बायाश्चरणपङ्कज-
स्मरणदायकस्तवराजः समाप्तः ॥

---

ॐ अज्ञानं निविडं तमोभगवति श्यामत्विषोऽपिक्षणात्
क्षिण्वन्ति क्षणदां विचित्रमहिमां मायासविद्यामयीम् ॥
कुर्वाणा हि विचित्रचित्रचरितं स्वानां जनानां मुदे भूयासु-
र्मयि दीनवत्सलतरा दृक्कोणपातास्तव ॥ १ ॥ श्रीमत्पदा
ब्जमकरन्दजुषां जनाना माकांक्षितोरुमधुरद्रवसंप्रपूर्णम् ।
नानाफलं ददति देवि दृगन्तपाताः कारुण्यवारिपरिपुष्टसुरद्रु
मास्ते ॥ २ ॥ शौर्यं बलं वपुषि सुन्दरतां ददाति विद्यां
सुकिर्तिमतुलां कवितां प्रभूताम् ॥ लक्ष्मीं सुलक्षणयुतां
तरुणीं जनाय दीनाय देवि नमते करुणाकटाक्षः ॥ ३ ॥
कामाक्षि चंद्रइव हर्षकरोजनानां ज्ञानं दिनं विशदयंस्तव
सूर्यतुल्यः ॥ उन्मूलयन्नशुभकर्ममहीरुहं मे हस्तीव राजति
शिवे करुणाकटाक्षः ॥ ४ ॥ इतिकरुणाकटाक्षमहिम्नःस्तोत्रं
समाप्तम् ॥

---

ॐ गुरुस्त्वं महातत्वबोधप्रदाता ॥ मुमुक्षोरुपास्यः सदा

शुद्धभावैः ॥ परब्रह्मविद्ये तदाराधकं त्वं निजानन्दबोधे नि-
मग्नंकरोषि ॥ १ ॥ हरत्यन्तरायंयतोविघ्नहर्त्ता । शिवेतेपदं
भास्करोभास्करत्वात् । श्रियःसंनिवासाद्धरिः शंकरत्वाच्छिवः
पंचदेवात्मकं संनतोऽस्मि ॥ २ ॥ शरत्फुल्लपंकेरुहश्रीसमान
त्वदीयाननस्वच्छलक्ष्म्याऽनिशंमे ॥ यदानन्दितं मानसं वद्धम-
स्ति तदागाढमेवाऽस्तुबद्धंमहेशि ॥ ३ ॥ त्वया सच्चिदानन्द
या मे कयाचित्मनोग्रंथिमन्मुक्तिमेतीतिचित्रम् । तवप्रेमसिं-
न्धौनिमग्नंतरेत्तत् त्विमंविश्वसिंधुं तदेवातिचित्रम् ॥ ४ ॥
नदाराकुमारःसुहृद्बन्धुरीशे तथाभृत्यवर्गश्चमंत्रीनदासः। भटो
भव्यहेतुर्नज्ञानेनृणांते पदंचारुसर्वेष्टदंभीतिहंतृ ॥ ५ ॥ न
नित्यंननैमित्तिकंकृत्यमीशे जपध्यानपूजादिरूपंमहेशि । कृतं
मानसेनैवशुद्धेनमातः कुपुत्रंकुदासंक्षमस्वाऽनुभावात् ॥ ६ ॥
हुतंनैवदत्तंकृतंनैवकर्म्म त्वदर्चाविधंदेविपाठंजपंच ॥ अतः
श्रेयसेमेनपश्यामिकिंचित् त्वदेकांकृपामन्तरासारभूताम् ७॥
गृहंदेववासोजनश्चक्रवर्ती ग्रहस्थोपिमुक्तोभवेत्त्वत्कृपातः ॥
परंपातकंपुण्यरूपंपरेशि नतोऽहंसदासारभूतां कृपांताम् ॥८॥
नपुण्यंनशीलंशिवतोषकारि ममप्राणनाथे तवैवाऽनुभावात् ।
विधेह्यम्बपादारबिन्दद्वयंते हृदिद्वादशार्काभमीशेमृडानि ९ ॥
मातर्मातःश्रीगुरोनाथशंभो शंभोबालेकालिकेतारिकेच । भी-
तंभीतंसंसृतेर्मोहजालात् त्राहित्राहित्वत्पदाब्जप्रपन्नम् १०॥
कृपाब्धिर्गुणाब्धिःसुखाब्धिःपराम्बा महाप्रेमपाथोनिधिश्चंद्र-
वक्त्रा । महाविश्वसिंधोः सदादीर्घनौका मुहुर्मेऽम्बिके जल्पते

यान्तुघस्राः ॥ ११ ॥ इतिश्रीगुरुरूपिण्याः पञ्चदेवात्मकचरणा रविन्दायाः कृपानुभावापराधक्षमापन भक्तरक्षाविधायक सर्वे ष्टप्रदचरणारविन्दप्राप्तिफलदायकनामस्मरणप्रार्थना स्तोत्रं संपूर्णम् ॥

मन्दस्मितमहिमा ॥

---

ॐ । मन्दस्मितेन करुणारसपूरितेन श्रीमन्मुखेन्दुजनितेन जगन्निवासे । गांगेयवारिविमलेन मदीयतापं पापोत्थमम्ब परिणाशयतावकेन ॥ १ ॥ आरक्ताऽधरमाश्रितापिजननि त्वन्मन्दहासप्रभा स्वाभाव्याद्भजतांसदासुकृतिना मुच्चैर्ददाना गतिम् ॥ चेतांस्युज्ज्वलयन्त्यहोवतशरत्पूर्णेन्दुशोभांपरां ॥ कल्मापीकुरुतेतरामितिमयाऽयुक्तंचयुक्तंमतम् ॥ २ ॥ मुक्ताहार कलानिधानरुचिरा स्त्वन्मन्दहासप्रभाः भूयासुर्भवतापपाप शमनाःकामाक्षिमेभूतये । शोभाःश्रीमुखपंकजस्यसहजा लंकारभूताःपरा नैजोत्कर्षतया सदासुरगणैः सौभाग्यजैत्र्यस्तव रा ॥ ३ ॥ स्वभावेनसदारम्योमुखचन्द्रस्तवाम्बिके तदाकिंसु तवक्ष्येहं स्मितचन्द्रिकयाऽन्वितः ॥ ४ ॥ ममत्वहीना निरहंकृताये स्वानन्दपूर्णानिजलाभतुष्टाः जगत्स्वरूपंपरिपश्यमाना विद्याविदस्तत्वविदोजनास्ते ॥ ५ ॥ इतिश्री नैर्मल्यकरी मन्दस्मितचन्द्रिकास्तुतिः समाप्ता ॥

---

श्रीमती स्वचरणपङ्कजं मे शिरसिकृपयाविदधातुतराम् ॥

ॐ। स्मितमुखोज्ज्वला सूर्यशोभिनी कुवलयेक्षणा चंद्रशे-
खरा। कुसुमबाणिनी चेक्षुचापिनी कुचभरैर्नता स्थीयतां हृ-
दि ॥ १ ॥ सकलदृङ्मनोहारि ते वपुः निखिलवाङ्मनोऽती-
तवैभवम् ॥ सकलभुक्तिदं मुक्तिदं शिवे ममनः सदा तेन यु-
ज्यताम् ॥ २ ॥ शरणमीयुषां शर्मदं नृणां ध्वजसरोरुहाद्य-
ङ्कितं तव। करुणयाहि मे दीनपालिके चरणपङ्कजं मस्तके
कुरु ॥ ३ ॥ जननि तेकृपा किं न साधयेत् विषममीश्वरि
प्रणतपालिके ॥ समसिदंकरोत्यल्पबोधकं निखिलबोधिनं
सर्वभूषणम् ॥ ४ ॥ जननिते जनोबीजमद्भुतं स्मरति वाग्भ-
वं चन्द्रनिर्मलम्। वदनकञ्जतोवैखरी सुधा। मधुस्फुरी समु-
त्पद्यतेऽचिरात् ॥ ५ ॥ जननिपुण्यकृद्बीजमध्यमंतवभजेज्ज-
नोबिम्बकान्तिमत्। भजति तं बधूर्मुक्तिरीश्वरि। बुधमनो-
हरा ते प्रसादतः ॥ ६ ॥ तव शिवेन्तिमं सायमग्निभं जपति
योनरोबीजमम्बिके। सकलसिद्धिभाक् जायते स वै चरण-
चिन्तकः पूज्यतेजनैः ॥ ७ ॥ परमवैभवात् ते कृपाबलात्तव
मनोर्जपात् शात्रवं मनः। जननि भेदकृत् हृत्यमूलतोनिजपदं
जनोयाति सौख्यतः ॥ ८ जननि ते कृपापारगौरवैरमृतशी-
तलैः शोभनैरसैः ॥ तव दृगंचलैः कामवर्षणैः स्नपयमां शिवे
विश्वतापितम् ॥ ९ ॥ तव कृपारसैर्हर्षवर्षणैः सुकृतपाकजैस्तु-
ष्टिदायकैः। शशिकलोज्ज्वलैः शीतलैः स्मितैरुचिकरैर्नृणां
स्नापयाऽधुना ॥ १० ॥ अकृतसौहृदं स्वाम्बिकासुतं ह्यपि-
परंपरेत्यस्ति पालिया ॥ भुवनपालिके विश्वसूर्जनं कुर्कातिनं
परंपाहि मामपि ॥ ११ ॥ मधुकरोयथा पद्ममीहते मम मन-

स्तथा तेऽग्निर्मीहते । कुरुकृपांशिवे पूरयाशुभे मम मनोरथं तेऽस्तुमे नमः ॥ १२ ॥ दनुजनिर्जितैर्निर्जरैः स्मृता झटिति दानवान् हंसि लीलया ॥ स्वजनपालिका त्वं समाऽपिहि पदमखण्डितं रासि तानधि ॥ १३ ॥ तव शिवे कृपालोकिताजनाः करधनाभवंत्येवसद्गुणैः । ग्रथितबुद्धयोलोकरञ्जनाश्चरणमानसास्त्वां भजन्त्यपि ॥ १४ ॥ गुणनिवन्धनैर्नामरत्नकै ग्रंथितकण्ठलः सद्गुणः सभासु । मतिमतामलं भूषयत्यहोह्युडुगणाङ्गणं चन्द्रमा यथा ॥ १५ ॥ परमरम्यकैस्तेऽम्बिके गुणैर्ग्रथितमानसोमुक्तिमेत्यहो ॥ तव गुणार्णवे मग्नमानसस्तरति ना जगत्सागरं तु सः ॥ १६ ॥ स्मितयुतं मुखं शङ्कते हि किं रुचिकरंशिवे पार्वणः शशी ॥ इति यतोजनोध्यायतोमुदा हिस्मयते मनस्तापहारकम् ॥ १७ ॥ दिवसहीनतां कालिमामपि रजनिनायकोनोभजेद्यदा ॥ सुकृतशात्रवं भावमीश्वरि तव मुखेन सः साम्यतामियात् ॥ १८ ॥ तव मुखेन ते साम्यमम्बिके भजतु श्रीमुखं नैवचन्द्रमाः ॥ दिनविलासकृन्निष्कलङ्कितं रजनिभास्करं धर्मरक्षकम् ॥ १९ ॥ जठररञ्जितः पालितस्त्वया जननि जन्मतोऽद्यावधिः प्रभो ॥ अव तथैवमामद्यतोऽपि हि करुणया जनं तावकसंगतम् ॥ २० ॥ तावकेन जगदम्बभुज्यते सेवकेन सुखमक्षयं हि तत् ॥ नेव लेखपतिनेभमानिना सार्वभौमपदवींस्थितेन च ॥ २१ ॥

इति श्री आनन्दगीतं समाप्तम् ॥

---

ॐ स्वर्णपाशाङ्कुशामिक्षुधनुः पुष्पशिलीमुखाम् ॥ उद्यन्द्रा-

नुसवर्णाङ्गी पूर्णाहन्तांप्रणौमि ताम् ॥ १ ॥ भूतेऽभूद्वर्त्तमाने-ऽस्ति भविष्ये च भविष्यति ॥ अखण्डोल्लसनां साक्षात् ० पू ० ॥ २ ॥ ब्रह्मादिस्तम्बपर्यन्त स्वरूपेणावभासिनीम् ॥ चिद्विलाससमुल्लासां पू ० ॥ ३ ॥ शिवादिक्षितिपर्यन्त षट्त्रिं-शत्तत्त्वविग्रहाम् ॥ तत्वातीतांशान्त्यतीताम् पू ० ॥ ४ ॥ कर्त्त्रीं भोक्त्रीं तथा कर्त्त्रींमभोक्त्रीं विश्वचिन्मयीम् ॥ एका मनन्यरूपाम्बाम् पू ० ॥ ५ ॥ बिन्दुनादकलातीतां स्वाश्रयां स्वप्रकाशिनीम् ॥ पूर्णाकाशांपरांकाष्टां पू ० ॥ ६ ॥ स्वमाधुर्य रसोल्लासतुच्छीकृतसुधापृथाम् ॥ प्रेष्टां प्रेष्टतरादाद्यां पू ० ॥ ७ ॥ स्वारम्भज्ञां स्वानुभावज्ञां सर्वज्ञां भक्तचित्तगाम् ॥ सर्वगाममलामिष्टां पू ० ॥ ८ ॥ पूर्णाहन्ताष्टकमिदं पूर्णाहन्ताप्रसादतः ॥ पूर्णाहन्तां पठन् ध्यायन् पूर्णाहन्तामवाप्नुयात् ॥ ९ ॥ इति श्रीपूर्णाहन्ताष्टकंसम्पूर्णम् ॥

---

श्रीवाग्वैभवविधायिनी विजयतेतराम् ॥

---

ॐ नेत्रेशिशिरीकुरुते हृद्गतकञ्जंविकाशयते ॥ अमृतमयं भानुमयं भास्वाँस्त्वन्मुखमहोचन्द्रः ॥ १ ॥ वितयातिधिषणा सिंधुं विश्वसमुद्रंविशोषयति । भास्करउतमुखमिंदुर्हृदयेखे-मातरुदयकारि ॥ २ ॥ विशदयतिसतांमनांसि क्षपयत्यज्ञान-शर्वरींसूर्यः ॥ मातस्तमुखमिन्दुःकुर्वन्मोदं सदास्विदास्ते-हि ॥ ३ ॥ भजतेऽनृजवे वासः शिरसिचागिरिजे त्वयादत्तः ॥ चंद्रश्चाभजमानः सोपित्यक्तःसुवृत्तसंपन्नः ॥ ४ ॥ चरणांशर-

णाकरणं चानन्दस्यान्वहंहरणम् ॥ विपदांशोभाधरणं मम-
चित्तकेहिंविश्वसंतरणम् ॥ ५ ॥ करुणादृष्टौपतितो जगदी-
शेश्वरि प्रबलपुण्यौघैः ॥ कामाक्षितेहिभक्तः पुरुषःस्याद्भोग-
योगसंयुक्तः ॥ ६ ॥ स्वीयंहेतिंहित्वा भ्रूधनुषामोहनास्त्रदृग्बा-
णान् ॥ तवहियुङ्क्ताश्रितस्त्वां कामोजितवाञ्छिवे शम्भुम् ॥ ७
॥ करुणारसंप्रवर्षति भक्तासितकण्ठमद्यहर्षंती ॥ मंजुकटाक्षघ-
टालीतव कामाक्षि हि शिवाय मे भूयात् ॥ ८ ॥ प्रावृण्मेघाली-
वहि रसंप्रवर्षत्यहोहिपल्लवितम् ॥ स्थाणुं तस्मेवदृष्ट्या स्मितकौ
मुद्याचकोरशीलधरम् ॥ ९ ॥ इत्यहोचित्रमितिभावः ॥ द्वि-
विधंरसंप्रवर्षति । ललिताकादम्बिनीचैका ॥ कामेशेमयि-
दीने शाङ्गारंसैवकारुण्यम् ॥ १० ॥ इत्यहोचित्रचमत्कार इति
भावः ॥ अधररसामृततृपितं स्मितगंगावारिवितरंती ॥ प्रा-
णप्रियतमसीशं ह्यधिकंकुरुतेमहच्चित्रम् ॥ ११ ॥ इत्यहोघट-
नघटनापटीयसीत्वंतस्याः ॥ क्षणचलिताभ्रूलतिका । जगदु
दयं करोति विकरोति ॥ पालनमपिसाकुरुते किंतेकामाक्षि वि-
श्वनाथाऽसौ ॥ १२ ॥ एषातेभ्रूलतिका ख्यातासंख्येयविश्वे-
षाम् ॥ जनिपोषणलयकारक कर्त्री कामाक्षिजीयात्सा ॥ १३ ॥
एषाक्षणेनविश्वं जनयतिहरते सुपुष्णाति ॥ भ्रूवल्लीतेमातः का
जेशाःकेवलंहिशोभार्थम् ॥ १४ ॥ चंपकवाटीसदने चंपकपुष्पा-
भनासिकेललिते ॥ चंपकपूजितचरणे चंपकहारशोभितेनमः ॥
१५ ॥ चैतन्यात्मयलिंगे भवमानाप्यलिंगिनीध्रुवरूपा ॥ तत्तु-
विश्वसमुद्रं दृष्टाकाप्यद्भुतानौका ॥ १६ ॥ सर्वाङ्गैरनुरक्ता
भवतीरक्तासतीहिसर्वाङ्गे ॥ मन्येहिसागिरिकन्ये कामेशेप्रिय

तमेसततम् ॥ १७ ॥ त्रिपुरेऽतुलितोमहिमा विराजते भुञ्जतो-
भोगान् ॥ विगताहन्ता ममता त्वद्भक्तस्यैवनान्यस्य ॥ १८ ॥
पल्लवसुरतरुरूपा लोकोत्तरदुग्धपूर्णघटफाला ॥ जयति हि का
चिदपूर्वा संसृतिरोगापनोदिनीलतिका ॥ १९ ॥ अद्वयरस-
परिपूर्णोहिमगिरिलतिकासमाश्लिष्टः । स्थाणुरपूर्वोजयति हि
चैतन्यानन्दसद्रूपः ॥ २० ॥ हिमगिरिजातापूर्वा लतिकाका-
पिचमत्कारिणीजयति ॥ भवतिहितद्दर्शनतःस्थाणुःसद्यश्च-
पल्लवितः ॥ २१ ॥ भक्तिर्ददातिमुक्तिंमुक्त्यानहिदीयतेभक्तिः ॥
नृपपरिचारकयोरिव शिवेऽनयोर्गरीयसीतेभक्तिः ॥ २२ ॥
भक्तिस्तत्रहिमुक्तिःसहचर्य्यम्ब हिकथंनकामाक्षि । राज्ञींवि-
हायचेटींसेवेतकोवैविचारसंपन्नः ॥ २३ ॥ चक्षुर्युगलेतरलां
सरलां चित्ते शिवस्यकरुणांताम् । विरला भजन्त्यरालां केशे
कुचयोः कठोरतापन्नाम् ॥ २४ ॥ श्रुतिपथचार्य्यपि नयनं
साञ्जनमिव भात्यनञ्जनं ललिते ॥ सत्संगत्या मुञ्चति कोपि
न धर्म्म स्वभावसंभूतम् ॥ २५ ॥ श्रुतिपथचार्यपि नयनं
चपलतरं वामगतिकमरिवलेशि । स्वस्मै नापेक्षितमपि क-
ल्याणं दिशति कथं न दासाय ॥ २६ ॥ श्रुतिपथचार्य्यपि
नयनं कारुण्यं यच्चशुद्धतां धत्ते ॥ युक्तं परमंजनतां रागं का-
माक्षि कथमरालत्वम् ॥ २७ ॥ अद्वैतश्रुतिचारे चारुणि न-
यनेतिशोभना करुणा । काचित्कामशिवस्य त्रातुं विश्वं
चमांजयति ॥ २८ ॥ कृपाम्बुधाराक्षालित सुजनस्वान्ता
घपङ्कबाहुल्याम् ॥ परचित्कलास्वरूपां शिवादिवंद्यां समा-
श्रयेगंगाम् ॥ २९ ॥ यद्यपिनद्योवह्व्यः सन्तिमहत्योभुविख्या-

ताः ॥ ईशशिरोधिनिवासा गंगादेवि त्वमेवैका ॥ ३० ॥ करुणा यं तेवृणुतेतमेव मुक्तिस्तदैवकामाचि ॥ मन्येऽखिलादिगरण्ये त्युभयोरनयोर्मतं चैकम् ॥ ३१ ॥ कुटिला शरला भूयान्मूलाधारावलंविनी काऽपि ॥ भुजगी त्रिधामरूपा शिरसि शिवन समरसीभवतु ॥ ३२ ॥ स्वात्मतया स्पृहणीया मनुभुवनानां यतोहि शोणासा । अथवाशुद्धारक्ता भक्तस्योद्धरणरागणी यस्मात् ॥ ३३ ॥ श्रीशंभुनाऽनुभूतंपितुः स्वभावं हि कठिनयोः कुचयोः॥ तापघ्नं गिरिजेते सद्भक्तैर्दृगंचले सततम् वै ॥ ३४ ॥ नीरागाऽपिसरागा शरणागतरक्षणे त्रिपुरा ॥ निष्कामापि सकामा तस्यैवोद्धारणाय सा भवति ॥ २५ ॥ सर्वेषां स्पृहणीया ह्यन्तर्याम्यात्मरूपिणी हियतः । सत्यपि शुद्धा शोणा स्वानामुद्धाररागिणी यद्वा ॥ ३६ ॥ शंभोर्भाग्यवशेन हि नीरागापि च सरागरूपवती । जाता हिमगिरिकन्या निरंजनापि साञ्जना भवति ॥ ३७ ॥ नखमणिकान्त्याकृपया तमसांस्तोमं सतां हि हृद्भुवनात् ॥ दूरीकुर्वन्त्याम्ब प्रकाशते वस्तुचरणांते ॥ ३८ ॥ शरणागत संरक्षण पोषणकरणे विचक्षणं चरणम् ॥ सत्सेव्याया गाढंश्रेयस्करणं गृहीतमस्तीह ॥ ३९ ॥ अतोमे निर्वाहेमुक्तौ च का चिन्ता न कापीति भावः॥ रजसा रजस्तमस्को योनायुक्तोहिविवृद्धशुक्लगुणः। मातः पद्पङ्कजयोः संस्तेसोऽभ्येति निर्वाणम् ॥ ४० ॥ चरणं चिन्तयतो मेचेतो भ्रमरायते मातः ॥ मुखचन्द्रं चतदेव हि तव देवि चकोरवदाभाति ॥ ४१ ॥ मृगमदविलसितभाला करधृतमाला मुखाब्जमधुहाला ॥ मानसमणिमयशाला नि-

वासशीला शिवाऽस्तु मे बाला ॥ ४२ ॥ त्रिभुवन जनप्रतिपा-
ला सद्यः संत्रोटिताऽहिताजाला । वरदायिन्यस्तु बाला चन्द्र
मुखी हंससंचाला ॥ ४३ ॥ ललिते लीलालसिते वसिते स-
न्मानसे मणिद्वीपे । असितेक्षणे कृपातो वसहृदयेमन्दहासि
तेमे ॥ ४४ ॥ दमनी दुष्टजनानांशमनी संसार मोहतापा-
नाम् ॥ जननी काजेशानां क्षमनी भक्तापराधानाम् ॥ ४५ ॥
यस्या येन हृतं वा यस्य ययांगं हि संप्रेम्णा सा सोवतु सा-
मर्द्धं कस्याः केन च कया कस्य ॥ ४६ ॥ दुष्कृतनिदाघभा-
नो प्रतपति यस्मिन् क्षणे झटिति । सुखयति मां हि महे-
श्वरि तव स्मृतिर्दाक्षिणः पवनः ॥ ४७ ॥ दुष्कृतनिदाघरवि-
णा प्रतापितं चास्वभावगतम् ॥ सुखयतु हिमगिरिकन्ये
तव स्मृतिर्मलयजः पवनः ॥ ४८ ॥ उंजसि कस्मिँश्चिदपि ब्रह्मा-
दितृणान्तविधाननिपुणे हि । लग्नं मनोनिरंतरमग्निशिखा
वर्णवर्णे मे ॥ ४६ ॥ वितरदयावतिदृष्टिं तेनस्यामद्यी लोके
॥ मय्यधमेऽल्पमनीषे स्वत्पदशरणागते कृपया ॥ ५० ॥ त्रि-
पुराचरणं शरणं यस्य नमरणं जनिर्भवति । तस्य हि स च
ज्ञानामृतभोक्ताभोक्तापि विषयाणाम् ॥ ५१ ॥ विश्वाविलक्ष-
णरक्षणचरणसरोजौ सतां सदा ध्येयौ । स्थेयौ हृदि मे
स्यातां श्रीमातुस्त्रिपुरसुन्दर्याः ॥ ५२ ॥ चरणं कमलं मन्ये
लक्ष्मीरुत्यद्यते हि यतः ॥ अथवेष्टवानदक्षं कल्पतरुं चरणा-
मम्बायाः ॥ ५३ ॥ विधिलिखितं दुर्वर्णं भालस्थं मेऽद्यविलुं-
पासि । अम्बाचरणसरोज द्वयमधुनासह परागेण ॥ ५४ ॥
परमामृतमयचरणं ह्यकरणकरणं मदीयशरणं तत् । भूयादे-

नोहरणं ह्यजरामरणं पराम्बायाः ॥ ५५ ॥ कर्माधीनोऽहंते कर्माधीनं तथैव जगदीश्वरि वारय कर्मविपाकं स्वरूपभूतं प्रदेहि मे प्रपदम् ॥ ५६ ॥ अमलं तव पदकमलं समलं शुद्धं सुवितनोति ॥ मामखिलेशि शिवेशि हि मम हृत्कमलेऽस्तुवासोऽस्य ॥ ५७ ॥ जयति त्रिपुरात्रिपदं प्रकाशविमर्शसामरस्याख्यं हि ॥ तुर्यं निर्वाणाख्यं वेदशिरोऽलंकृतीभूतम् ॥ ५८ ॥ संसृतिसमुद्रपोतं नानानन्दैकदायकं पुंसाम् । श्रीत्रिपुरापदयुगलं श्रीगुरुकृपया मया लब्धम् ॥ ५९ ॥ द्रढतरगुणैर्निबध्वा ललिते मां तावकैः परमैः । पशुपतिभावं नीत्वा पशुता प्रात्सारणीया मे ॥ ६० ॥ चरणे भवभयहरणे रम्यरणन्नूपुराभरणे । अरविन्दश्रीहरणे स्वान्तंस्यादम्बते हि शिवकरणे ॥ ६१ ॥ कमनीयं चरणयुगं सत्पुरुषाणां सदैव शरणीयम् । भजनीयं ते शोभन ब्रह्मादीनां सुनमनीयम् ॥ ६२ ॥ धाम्ने त्रिलोकधाम्ने परिमितनाम्नेऽतिचैत्याव । प्रस्फुटललितानाम्ने कारुण्याय लुभ्यते मे चेतः ॥ ६३ ॥ श्रीसर्वान्तर्यामिणि जानासि त्वं मनोगतं सर्वम् ॥ एवंकुरु मा चैवं कथयामि तवाग्रतः किमतः ॥ ६४ ॥ हरिणाङ्काङ्कितभालं करिणामीश्वर इवास्यसंचालम् ॥ कुचकलशभारखिन्नं ब्रह्माभिन्नं तवेशि रूपमलम् ॥ ६५ ॥ नलिनीदलगतजलवत् स्पृशति न यं देवि कर्मलेशोऽपि । वन्दे तं तवभक्तं अन्तरशक्तं हि कर्मकुर्वाणम् ॥ ६६ ॥ अलकावल्यलिमाला शोभितपङ्केरुहाननं यस्याः । चित्रं स्मितकौमुद्या स्तमोन्तरीयं हरत्याशु ॥ ६७ ॥ कामशिलीमुखनयनं तच्चापभ्रूयुतंकृत्वा ॥ दृक्चाराक्षेपेण हि

चित्रं निष्काममानसं कुरुते ॥ ६८ मञ्जुदृगञ्चलमालां स्वरूपशोभाधिराजसत्कन्या श्यामसरोजोद्भूतां कामेश्वरवरोरसि क्षिपति ॥ ६९ ॥ भ्रूयुगलाकृतिधनुषः कोटिविसृष्टं कटाक्षविशिखं ते । धैर्यं कवचं शंभोः शतधा कुरुते परं चित्रम् ॥ ७० ॥ गंगां स्मितमिति मत्वा महेश्वरेणाम्बते शीर्षे ॥ स्वे किंधृतासुघटते विष्णुपदी ह्यन्यथा तत्र ॥ ७१ ॥ स्वजनं रक्षणकामा स्मेरविभूतिं हि दिक्षु विक्षिपति ॥ तन्मुक्त्यर्थं परितो ग्रस्तं तृष्णापिशाचिन्या ॥ ७२ ॥ संजीवित स्तव दृशा सहभू स्त्वदीयभ्रूचापसुन्दरदृगञ्चलबाणधारी कामेश्वरि त्वदुपसंश्रितईशदग्ध ईशं विजित्य तव दास्यकरं कृतज्ञः ॥ चकार इतिशेषः ॥ ७३ ॥ एकानन्तानंदा शुद्धा बुद्धा हि चिद्रूपा ॥ पूर्णा विश्वसिसृक्षोरिछाभिन्ना परेशस्य ॥ ७४ ॥ सुकृतवृक्षफलं फलदं नृणांश्रुतिपयोनिधिरत्नमलौकिकम् ॥ मम मनोरथसिद्धिसुरूपकं सकलमातुरिदं हि पदाब्जकम् ॥ ७५ ॥ इतिश्री सौभाग्यरसमाधुरीस्तोत्रम् समाप्तम् ॥

---

श्रीमच्छिवशक्तिस्वरूपिणी विजयतेतराम् ॥

---

एकैवकाचिदमला निजलीलयैव भक्तेष्वनुग्रहवशात्परमं स्वरूपम् शाक्तं च शैवमिति यद्द्विविधं सुधृत्वा रूपेण चोभयकयोस्त्रिशतीं जगाद ॥ १ ॥ श्रेयस्करी सकलतापहरीजनानां वांछार्थदा निगमसारवती प्रसिद्धा । नाम्नां शतत्रयवती त्रिशतीशिवायाः । जिह्वाग्रगा भवतु मे परदेवतायाः ॥ २ ॥

वागूदेवताष्टकमुखाब्जविनिर्गताया आनन्दसिन्धुलहरी ललिताक्षरालिः ॥ धर्मार्थकामपरमार्थपदप्रदा मे नामालिरस्तु रसनाग्रगता शिवायाः ॥ ३ ॥ इतिश्रीत्रिशतीरत्नत्रयं समाप्तम् ॥

---

ॐ एकमद्वयमनन्तमीप्सितं मामकं परमसौख्यदायकम् ॥ व्यापकं सकललोकपावनं दर्शयाम्बपदमक्षयं तव ॥ १ ॥ संसारतापपरिदग्धकलेवरस्य दुःखच्छिदे जननि तावकपादकञ्जम् ॥ सिद्धौषधं गुरुभिषग्वरसंप्रदिष्टं भूयाद्भवानि मम मस्तक एव नित्यम् ॥ २ ॥ तप्तानामातपत्रं भवदिवसपते रश्मिजालाज्जनानां भक्तानां कामरत्नान्यविरतमखिलान्याकिरत्स्वच्छभासम् ॥ मातः पादाब्जयुग्मं नखशशिदशकं सन्निधानं श्रियस्ते सान्निध्यं स्वस्य देयान्निजजनहिमतया मह्यमाखण्डलेशि ॥ ३ ॥ धन्यास्त एव सुखिन स्त्रिपुरे भवत्याः पादारविन्दयुगलं हि विचिन्तयन्ति ॥ मान्याः सतां समधियो भुवनैकवन्द्या भूमौ भवानि भवतापहरा जयन्ति ॥ ४ ॥ यथा विहंगा झटिति प्रयान्ति श्रीमद्गुरोर्लब्धशरण्यदीक्षाः ॥ तवेह मातः स्वपदं महान्त स्तथापदाब्जार्चनयाऽव्ययं तत् ॥ ५ ॥ परिहृतपाथोजश्रीः किसलयरुचिहारको हि चरणस्ते शोणिम्ना च मृदिम्ना प्रभया मेऽज्ञानतमोहरतु ॥ ६ ॥ इति श्रीचरणारविन्दस्तुतिः समाप्ता ॥

श्रीअम्बादर्शनलालसापरिपूरिणी अम्बाजनभक्तिर्विजयतेतराम् ॥

अम्बादर्शनलालसाभरमहो तस्याः प्रसादादहं साफल्यं विदधे ह्यतश्च सदृशः कोऽनेन भूयान्नृणाम् ॥ एतादृक् फलसिद्धये न हि यथा मोक्षस्य भक्तिं विना हेतुर्भक्तिविलब्धयेऽत्र जगति स्याद्भक्तसंगं विना ॥ १ ॥ नामश्रवणं जातं सफलं श्रवणं तदेव संजातम् ॥ अधुना नयनं सफलं करोमि ते देवि दर्शनतः ॥ २ ॥ चरणं कमलं मन्ये लक्ष्मीः संपद्यते हि यतः अथवेष्टदानदक्षं कल्पतरुं चरणमम्बायाः ॥ ३ ॥ विधिलिखितं दुर्वर्णं भालस्थं मेऽद्यविलुम्पामि ॥ अम्बा चरणसरोजद्वयमधुना सह परागेण ॥ ४ ॥ यस्याः प्रसादात् खलु मानवानां स्वर्गापवर्गौ सुलभौ भवेताम् ॥ अतोहमम्बां प्रणिपत्य सादरं संप्रार्थयामीह कृपां तदीयाम् ॥ ५ ॥ इतिश्री श्लोकपञ्चकमेतदम्बिकायाः परमपावनगुर्जर प्रांतदेशस्थायाः समाप्तम् ॥

---

ॐ अज्ञानतामिश्रदिवाकराभं प्रपन्नचित्ताब्जरविप्रकाशम् ॥ दैन्यद्रुमच्छेदन सत्कुठारं ह्याराध्य पादाब्जमहं नतोऽस्मि १ ॥ आनन्दकन्दमसुरामर वृन्दवन्द्यं श्रीवारणेन्द्रमुखमीप्सितदानदक्षम् ॥ आमोद मोदक सुभाजन पाणिपद्मं विघ्नापहं वरदराजमहं नमामि ॥ २ ॥ प्रकाशसूर्याविव संप्रयुक्तौ लीलासमाश्लेषित दिव्यरूपौ ॥ परस्परावासित मानसौ तौ वन्दे शिवौ वाङ्मनसोर्विशुद्ध्यै ॥ ३ ॥ विश्वेषां रक्षणाय त्रिदशवरनुतः कालकूटं पपौ यः ख्यातः कालान्तकोऽसौ पुनरपि हि सदा मीलिताक्षः स्मरारिः ॥ नागास्तृप्तिं

रिरंसुः स्वयमपि चरमन्देवदेव्या भवान्या देव्यैक्यं संगतो-
योऽखिलगुरुरवतु श्रीमहेशः कृपालुः ॥ ४ ॥ चन्द्राननाच-
न्द्रसमानवर्णा चन्द्राभभूषाम्बरमादधाना ॥ लालित्यचि-
त्रस्तवनप्रसन्ना वाणी प्रदेयादमला गिरोमे ॥ ५ ॥ घनश्या-
मला दोर्भिरम्बा चतुर्भिः दरं सेषुचापं च चक्रं वहन्ती ।
ललाटार्द्धचन्द्रा त्रिनेत्रा हरिस्था निजानन्दिनी स्वामिनी
मे सदाऽव्यात् ॥ ६ ॥ सेवायां स्थिता सिंहवाहिनी मूर्त्ति-
स्तस्याध्यानम् ॥ चक्रं शूलं कराब्जैः कनकमणिमयं सर्वका-
मप्रपूर्णं पात्रं खड्गं दधाना प्रणतजनमनोऽभीष्टदानैकदक्षा ।
दुर्गा स्मेराम्बुजास्या हरिविधिगिरिजा नाथसंसेव्यपादा ॥ सिं-
हासीना भवानी मम हरतु भयं द्राग्दयादृष्टिपातैः ॥ ७ ॥
अजातपुंस्पर्शरतिं कुमारिणीं कन्यां सदा विश्वमनोविहा-
रिणीम् ॥ ब्रह्मेन्द्रविष्ण्वीशनताङ्घ्रिकामहं नतोऽस्मि दुर्गामखि-
लार्थदायिनीम् ॥ ८ ॥ नतोऽस्मि नवयौवनां घनसमान-
कान्तिं शिवां मतङ्गकुलमण्डनी प्रचुरपुण्यचित्ते भवाम् ।
सुरासुदितमानसां सकलकामसंदोहिनीं विनम्रवरदायिनीं
त्रिभुवनेश्वरीमत्रिणीम् ॥ ९ इतिश्री गुर्वादिनामरूपधारिणी
स्तोत्रं समाप्तम् ॥ हरत्यन्तरायं यतो विघ्नहर्त्ता शिवे दे-
पदं भास्करो भास्करत्वात् । श्रियःसंनिवासाद्धरिः शङ्कर-
त्वाच्छिवः पञ्च देवात्मकं सन्नतोऽस्मि ॥ १ ॥ कृपा तव तरं-
गिणी । विमल भावपाथो निधे स्त्वरा भवतु संगिनी विषयि-
कस्य मे सर्वदा ॥ समस्त भुवनेश्वरि त्रिविधतापविध्वंसिनी
प्रमोदपददायिनी। जनसलापसंहारिणी ॥ २ ॥ अज्ञाजन

जननि विष्णुहरादिदेवान् विश्वस्थितिप्रलयसृष्टिकरान्वदंति । स्वस्वाधिकार्यकरणे च तएव सृष्टादेवि त्वया कथमतः प्रभव स्तदाते ॥ ४ ॥ तावकेन जगदम्ब भुज्यते सेवकेन सुखमक्षयं हि तत् ॥नैव लेखपतिनेशमानिना सार्वभौमपदवींस्थितेन च ॥५॥ गतकलङ्कशशाङ्कसमच्छवि समुदयत् प्रतिवासरमम्बिके ॥ सुखकरं दुरितौघहरं परं ह्यवतु मां ललितं वदनं तव ॥ ६ ॥ जननि मोदयतु प्रणमामि तवद्युदये हृदयेऽवयुनं तमः ॥ गमयति प्रलयंवदनं तव प्रबलपुण्यचयैर्मनुजस्य माम् ॥ ७ ॥ श्रीमद्गुरोः सेवितपादपद्मा स्तदाशिषा शुद्धहृदो जनाये । अनेकजन्मार्जितपुण्यभाजो ध्याने समागच्छति देवि तेषाम् ॥ ८ ॥ ब्रह्मत्वं तदभिन्नशक्तिरचलाऽ नन्तागुणा निर्मला । त्वं विद्या ज्ञानरूपा त्रिगुणमयतनुर्ब्रह्मविष्ण्वीशयोनिः । कोटिब्रह्माण्डमाता त्वमसि च परमाऽ धारभूताऽखिलानां विश्वेषां पालयित्री भगवति शरणं घोरदुःखे त्वमेका ॥ ९ ॥ मातः श्रीमूलमन्त्रं तव जपति जनो भोगमोक्षैकमूलम् संप्राप्तं नाथवक्त्राद्विकसितवनजात् प्रत्यहं ध्याननिष्ठः ॥ हत्वाशु द्वैतजालं स भवति च महामोक्षभागत्र नुनं ह्यद्वैतानन्दपूर्णो विमलतरमना स्त्वत्कृपापात्र एव ॥ १० ॥ धर्मादर्थात्कामनातो विवेकात् सेव्या चैका तत्त्वविद्भिः परैव । यस्याः सेव्यं पादपद्मंविधत्ते दासस्यार्थे भूरिभोगं च मोक्षम् ॥ ११ ॥ भूतोद्धारपरायणासु कृतिभिर्ध्येया जनैर्मुक्तये यद्यद्वाञ्छित लब्धये सुमनसां चिन्मात्ररूपा परा । ब्रह्माद्याः प्रभवंति नैव सदया दाने वरस्य क्षमा स्तस्यास्तंत्रतया प्रवर्त्तनपराः

शास्त्रेषु निश्चीयते ॥ १२ ॥ ममत्वहीना निरहंकृता ये स्वा
नंदपूर्णा निजलाभतुष्टाः ॥ जगत्स्वरूपं परिपश्यमाना विद्या-
विद स्तत्वविदो जनाये ॥ १३ ॥ विलोकिता स्ते करुणार्द्र-
दृष्ट्यात्वामेव जानन्ति जगत्समग्रम् ॥ अहंममत्वेन विजृंभि
तं ये भेदेन हीना परमात्मरूपाम्॥ १४ ॥ जितामरजितेजिते
जननि मुक्तमालावृते सुरासुरनमस्कृते वृजिनदुःखदूरीकृते ॥
सुधाम्बुधिविहारिणि स्मरणरागिसंतोषणि । परामृतविधा-
यिनि प्रणतपालिनि त्राहि माम् ॥ १५ ॥ दोषाकरं कुटिल
मेवकलङ्किनं त्वमम्बाश्रितं न च जहासि महानुभावात् -
चन्द्रं शिरःकृतपदं क्षमतांवरिष्टे मांतत्समं त्यजसि किं तव
पादलग्नम् ॥ १६ कर्तृप्रपालकहरा जगतां त्रिदेवाः ज्ञात्वा
प्रभावमतुलं परदेवतायाः । ईशः सदाशिव इमावपि सं-
प्रलक्ष्य मंचत्वमापु रपि यच्चरणाम्बुजस्य ॥ १७ ॥ भूमौ
गतायां धरणी न वेत्ति भुवं विजानाति विभर्त्ति यावै एवं च
तत्वेषु गतापरेषु ज्ञाना मया तत्कृपया शिवास्तु॥ १८॥ रजस्तमः
सत्वभिन्ति स्वनेत्रयो र्विभर्षिशोणासितशुक्लवर्णतः। शिवेऽवसा
ने हि लयंगताः पुनः त्रिदेवताः संरचितुं हरादिकाः ॥ १६ ॥
प्रणयकलहान्नम्रीभूतः पदाब्जशिरोधृतो मदनदहन श्रीशम्भू
स्ते पदेन तिरस्कृतः ॥ कुसुमधनुषा चेत्थंभूतोविलोकित
एषतत् हसित इव ते पादाभूषारवस्य मिषेणहि ॥ २२ ॥
सुखेन चन्द्रस्य सुरद्रुमाणां करैश्चपद्भ्यां कमलस्यलक्ष्मीः
समस्तलक्ष्म्यांतव चेटिकायां सत्यांहृताम्बात्रन वेद्मि बीजम्
॥ २३ ॥ इतिश्री पराम्बिकानानारूपगुणरत्नमंजूषारूप स्तुतिः
समाप्ता ॥

ॐ श्री उद्यत्सहस्ररविधाम समानकान्ति मन्दस्मितेक्ष
युतांकुचभारशोभां पाशांकुशैक्षवशराशन वाणहस्तां ध्या
सदा परशिवाङ्कगतां परामबाम् ॥ १ ॥ कामेश्वराङ्कमणि
निवासशीलां तुल्यस्वरूपगुणवेषवयोभिराम कामेशबाहु प
रम्भणमोदपूर्णां ध्याये मुखेन्दुविलसत्स्मित चन्द्रिकान्ताम्
२ ॥ कारुण्यपूर्णनयनां स्मितवक्त्रशोभातुच्छीकृता मृतकला
धिपूर्णलक्ष्मीम् ॥ भक्तेप्सितार्थपरिपूर्णधृतस्वरूपां लालित्यचि
गुणरूपधरां भजेऽहम् ॥ ३ ॥ श्लोकत्रयं पठति यः परदे
तायाः श्लोकार्थमानसविवृद्धसुभक्तिपूर्णः ॥ संयाति सौ
मखिलं भवपाशमुक्तो निर्वाणनामकपदं लभते मनुष्यः

इतिश्री मन्महात्रिपुरसुन्दरी त्रिरत्नस्तोत्रं समाप्तम् ॥

---

श्रीगणेशाय नमः ॥

नन्दा नन्दतु मांनाम्ना स्वकीयेन सनातनी । रक्तदन
स्वरागेण मनोमेरज्यतां शिवा ॥ १ ॥ शाकम्भरी स्वरूपय
सुधारूपान्नपानकैः ॥ नित्यं पुष्णातु मां देवी स्वकीय ध्या
हेतवे ॥ २ ॥ दुर्गादुर्गमसंसार शत्रुभीति विनाशिनी भूय
सा वरदा मह्यं सती मे चित्तगा सदा ॥ ३ ॥ शताक्षी श
णापन्नं शतनेत्रै र्विलोकयमाम् । संसारज्वरनाशाय दद्यात्
वारसामृतम् ॥ ४ ॥ यद्भयाद्वाति पवनो यद्भयात्तपते रविः
पातु मां सर्वभयतः सा भीमा भीमशासना ॥ ५ ॥ निज
स्यमनोभृगं करे कृत्वा कृपावती । कन्जे निर्भीतिमधुनि भ्र
मरी हरतु भ्रमम् ॥ ६ ॥ अपूर्वा षट्पदी देव्या भक्तकञ्ज

खेवसेत् । अहो मधुमहच्चैषा ददाति परमाद्भुतम्
इतिश्री देव्याषट्पदी स्तोत्रम् समाप्तम् ॥

---

जितामरजितेऽजिते जननिमुक्तमालावृते सुरासुरनमस्कृते जगति दुःख दूरीकृते ॥ मुखेन्दुवचानामृते स्वजन काम पूरीकृते दिगादिभि रनावृते करुणया हि चित्तेभव ॥ १ ॥ स्मरामिपरदेवतां निखिलदेवसंसेवितां । घनछविविलासिनीं कुकृततापसंछेदिनीम् ॥ कृपामृतसुवर्षिणीं स्वजन मानसाल्हादिनीं वरं वरय नादिनीं मवयुनान्तसंदर्शिनीं ॥ २ ॥ करेकृतकपालिनीं स्वजन पालिनीं शूलिनीं गजेन्द्रगतिगामिनीं गिरिशकामिनीं शोभिनीम् ॥ परामृतविधायिनीं भवभयापसंचारिणीं महामहिमशालिनीं शरणदायिनीं नौमि ताम् ॥ ३ ॥ श्लोकत्रयं पठेद्भक्त्या श्रीमातुर्नित्यदा नरः एकाग्रमनसा ध्यात्वा शरणी सुखमाप्नुयात् ॥ ४ ॥ इतिश्रीशरणदायिनीरत्नत्रयंस्तोत्रम् ॥

---

उँश्रीअजातपुंस्पर्शरत्यै कुमारिण्ये श्रीदुर्गायैनमः ॥

---

हयारिप्रधानाःशिवे दानवा येजितार्यायुधाद्यामरा एकयैव त्वया लीलया संगरे संहतास्ते रणे क्रीडयन्त्यापवर्गप्रदात्र्या ॥ १ ॥ गता उत्तमान्ते गतिं यत्र यान्ति परे निर्मलप्रज्ञलोका हि दुष्टाः ॥ तवाम्भोजशोभा हरक्रोधनेत्रप्रभालोकिताः पूतभावा भवानि ॥ २ ॥ तवाङ्गप्रसंग्यस्त्रसंस्पर्शिनो वै निरीक्ष्यन्त आस्येन्दुशोभां महेशि ॥ अनेके हता दुष्टदै-

त्या अवापुः पदन्ते ह्यवन्त्याः पदाब्जप्रपन्नान् ॥ ३॥ इति-
श्रीरत्नत्रयंस्तोत्रम् ॥

---

ॐअजातपुंस्पर्शरतिं कुमारिणीं कन्यां सदाविश्वम-
नोविहारिणीम् ॥ ब्रह्मेन्द्रविष्ण्वीशनतांघ्रिकामहं नतोऽस्मि
दुर्गां मनसेप्सितार्थदाम् ॥ १ ॥ पूर्णशून्यस्वरूपत्वात् पुरुष-
त्वाल्लिङ्गमस्तका ॥ शक्तिस्वरूपभूतत्वातूमस्तके योनिधार-
णी ॥ २ ॥ ज्ञानप्रकाशरूपत्वादुद्यत्सूर्यसमप्रभा ॥ सर्वेषां
स्वात्मरूपत्वात् प्रेष्ठत्वादरुणप्रभा ॥ ३ ॥ आद्यत्वा त्सर्वशो-
भात्वादाद्यलक्ष्मीरितीरिता ॥ पायान्मां सर्वदारिद्राच्छिवश-
क्तिस्वरूपिणी ॥ ४ ॥ ब्रह्मविष्णवीशजननी काली लक्ष्मीः
सरस्वती ॥ अम्बिका जगदम्बासा पायान्मां सर्वतोभयात्
॥ ५ ॥ सैव काली सैव लक्ष्मीः सैववाणी पराम्बिका ॥ ब्र-
ह्मविष्णुशिवाः सैव सैव मां सर्वतोऽवतु ॥ ६ ॥ स्थीयते च
जगद्यस्यां सृष्टिस्थित्यन्तकारिणी ॥ या ब्रह्मचिद्घनाकारा
भासते वस्तुरूपिणी ॥ ७ ॥ अवियोगससंयोगा ब्रह्मणः पर
मात्मनः ॥ शक्तिस्वरूपस्फुरणा तद्रूपा जगदात्मिका ॥ ८ ॥
सर्वनामा सर्वरूपा देशिकेन्द्रकृपाचताम् ॥ आत्मभूताराध्यरू-
पा मंत्रयंत्रस्वरूपिणी ॥ ९ ॥ अनेकजन्मतपसः फलरूपपदा-
म्बुजौ ॥ प्राप्येते कृतिभिर्यस्याः सानुगृह्णातु मां सदा ॥ १० ॥
काली तस्यास्तमोरूपा रुद्रवाणीं विधायिनी ॥ करालापि
दयारूपा कान्तिसौभाग्यधारिणी ॥ ११ ॥ शत्रुसंहरणे क्रोधं
कालरात्री विधीयताम् ॥ महामाया योगनिद्रा मम रक्षां

करोतु सा ॥ १२ ॥ तमोपहंत्री भक्तानां तमोवत्यपि साऽचि-
रात् ॥ स्वीयैः संसेविता स्वानां विश्वत्रासविनाशिनी ॥ १३ ॥
ब्रह्माणं या श्रियं देवी जनयामास निर्गुणा सगुणा सा सृष्टि-
काले नतोऽहं तां तडित्प्रभाम् ॥ १४ ॥ वीजपूरं गदां चर्म-
पानपात्रं च विभ्रती ॥ नागं लिङ्गं चयोनिं च मस्तकेऽवतु-
साम्बिका ॥ १५ ॥ कोट्युद्यद्रविसंप्रख्या त्रिनेत्रा चंद्रभूषणा ॥
पद्मासना भगवती स्वेच्छाविश्वविनोदिनी ॥ १६ ॥ अस्या रजो-
गुणवती संपद्रूपस्वरूपिणी ॥ कुर्यान्मनोरथं पूर्णं देवी श्री-
विष्णुना सह ॥ १७ ॥ आद्यलक्ष्म्याः सत्ववती वाणी पर-
मनिर्मला ॥ तत्वप्रकाशिनी विष्णुगौरी धात्री पुनातुमाम् ॥
१८ ॥ यस्यामुदयमानायां विश्वं भवति नान्यथा ॥ पंचाश-
द्वर्णरूपां तां धर्मादिपुरुषार्थदाम् ॥ १९ ॥ चन्द्राननां चन्द्र
वर्णां चन्द्रभूषणभूषिताम् ॥ चन्द्राभभूषणां चन्द्रमाल्याम्बर-
विलेपनाम् ॥ २० ॥ नौमि तां परमानन्दां सर्वज्ञत्वविधायिनी
म् ॥ वाचां वैभववृद्ध्यर्थं सर्वकामदुघेश्वरीम् ॥ २१ ॥ का-
लीजातः शिवो वाणीजनिका पार्वती शिवा ॥ कुर्वातां मङ्ग-
लं मह्य सुभौ जगदधीश्वरौ ॥ २२ ॥ काली वाणी स्वरूपौ
तावाद्यलक्ष्मीमयौ परौ ब्रह्माण्डभेदकौ स्यातां दारिद्र्यहरणे
परौ ॥ २३ ॥ आद्यलक्ष्मीजन्मभूमिर्लक्ष्मीर्विष्णुश्चयीजनिः ॥
ब्रह्माण्डपालकावेतौ मम धर्मस्य पालकौ ॥ २४ ॥ भवेता-
मनिशं लक्ष्मीवाणी रूपौ महाबलौ ॥ आद्यलक्ष्मीस्वरूपौ
मां पुष्येतां करुणार्णवौ ॥ २५ ॥ ब्रह्माद्यलक्ष्मीजनका
कालीजन्मा सरस्वती ॥ मम मोदं विधीयेतांब्रह्माण्डोत्पत्ति-

कारकौ ॥ २६ ॥ कालिकादिरमात्मानौ जगतां पितरौ वरौ श्रेयोविधाने भूयास्तां जगतां परमेष्ठिनौ ॥ २७ ॥ वाग्भवाधीश्वरीश्यामा मायेशी कमलालया ॥ कामेश्वरी शारदाख्या तत्समष्ठीश्वरी परा ॥ २८ ॥ आद्यलक्ष्मीरितिख्याता नववर्णात्मिका शिवा ॥ नवदुर्गात्मिका चण्डी साक्षाद्ब्रह्मस्वरूपिणी ॥ २९ ॥ पराम्बिका तुरीया सा त्रिपुरा परमेश्वरी ॥ ललिता लक्षलिलाढ्या लालतां कृपया हि माम् ॥ ३० ॥ नन्दा नन्दतुमां नाम्ना स्वकीयेन सनातनी ॥ रक्तदन्ती स्वरागेण मनोमे रज्यतांशिवा ॥ ३१ ॥ शाकम्भरी स्वकृपया सुधारूपान्नपानकैः ॥ नित्यं पुष्णातु मां देवी स्वकीयध्यान हेतवे ॥ ३२ ॥ दुर्गा दुर्गमसंसारशत्रुभीतिविनाशिनी ॥ भूयात्सा वरदा मह्यं सती मे चित्तगा सदा ॥ ३३ ॥ शताक्षी शरणापन्नं शतनेत्रैर्विलोक्य माम् ॥ विश्वज्वरविनाशाय दद्यात्सेपरामृतम् ॥ ३४ ॥ यद्भयाद्वाति पवनोयद्भयात्तपते रविः ॥ पातु मां सर्वभयतः सा भीमा भीमशासना ॥ ३५ ॥ निजभृत्यमनोभृङ्गं करे कृत्वा कृपावती ॥ कञ्जे निर्भीतिमधुलि ॥ भ्रामरी हरतु भ्रमम् ॥ ३६ ॥ इतिश्रीपराम्बास्तुतिः समाप्ता ॥

---

श्रीः के ते वर्त्मनि नोमूढा जाता ब्रह्मादयः सुराः ॥ अत्यन्ताज्ञस्तदाहं कः क्षम्यतां जगदम्बिके ॥ १ ॥ क्षम्यतां क्षम्यतामम्ब शरणागतरक्षिणि जननी नैव गृह्णाति दोषान् स्वकलभस्य च ॥ २ ॥ यथा प्रकाशः सूर्यस्य इन्द्वग्न्योस्ताद्द-

शो न हि कृपाकरा त्वमेवैकाम्बिके रक्ष क्षमस्व मे॥ ३॥ इति-
श्री क्षमाकराररत्नत्रयंस्तोत्रं समाप्तम् ॥

श्रीः ॥ नमत्सुरेन्द्रनायिकालिकावलिद्विरेफिकावलिप्रपूजि-
तं मुदा मुनीन्द्रमानसालयम् मृदुप्रमोद्यलौकिकं पदाब्जम-
म्बिकेतव प्रणौमिविश्वतारकं सदा भयापहारकम् ॥ १ ॥
विरंचिवाहनाङ्गनाप्रयाणशिक्षणेचणम् ॥ नखेन्दुकौमुदी स्फु-
रद्विभूतिशङ्करं वरम् ॥ तवांघ्रिमीश्वरिप्रभाकरंसदा विलोकद-
म् भवांधकारहारकं सतांमनोब्जमोदकम् ॥ २ ॥ दरारिपङ्क-
जाश्रयं श्रियोनिधानमन्वहं धनछवि जगत्त्रयप्रपोषकं गुणाक-
रम् ॥ तवांङ्घ्रिमम्बिके सदा प्रणौमि विश्वरूपिणम् विपत्र-
मानदायकं सुरासुरैर्नस्कृतम् ॥ ३ ॥ पदाब्जधूलिनिर्मले गु-
रोर्जनस्य मानसे सुदर्पणे शिवे स्वरूपमम्बिकेफलत्यदः ॥
निसर्गसुन्दराकृति त्वदीछया सुभास्वरं ह्यनेकजन्मसाधिता-
न्यदेवपूजनस्य ते ॥ ४ ॥ कराञ्चितप्रफुल्लपुष्पशायकं धनुर्ध-
रंरूपाकदम्बवीक्षणैर्मनोहरैर्विलोकयमाम् ॥ हृदि स्वरूपम-
म्बिके शिवाख्यमुज्ज्वलं कुरु क्षणं फलन्मनोरथं निधायमस्त
के पदम् ॥ ५ ॥ शिशुशशाङ्ककिरीटसमुज्ज्वला शरदिपार्वण-
चन्द्रसमानना ॥ हिमकरातपहासमनोहरा स्फुरतुसाहृदिमे-
परदेवता ॥ ६ ॥ विश्ववने मेभ्रमतश्चेतःपुरुषस्य पावनंचर-
णम् ॥ शरणं भवतु भवान्याः संविद्रमणीसुखंयत्र ॥ ७ ॥
श्रीमत्पदाब्जमम्बाया ध्यात्वापादाब्जसंस्तुतिम् ॥ पठते हि
नरोभक्त्या सर्वसौख्यमवाप्नुयात् ॥ ८ ॥ इति श्रीपादारवि-
न्दस्तुतिः समाप्ता ॥

उँश्रीगुरुपादुकाभ्योनमः ॥

उँश्रीगणेशायनमः ॥

उँ श्रीभगवतीसकलान्तर्यामिणी विजयतेतराम् ॥

उँ ॥ अखण्डानन्दचिन्मात्रा खण्डचन्द्रवरानना ॥ अखण्डगुणशोभाढ्या खण्डचन्द्रवरासना ॥ ॥ १ ॥ अखण्डैश्वर्यसंयुक्ताऽखण्डचक्रनिवासिनी ॥ ॥ अखण्डपति सौभाग्याऽखण्डज्ञानविलासिनी ॥ २ अखण्डविलसद्रूपा खण्ड राज्यसुखप्रदा ॥ अखण्डवरदाऽखण्डभोगमोक्षवरप्रदा ॥३॥ अखण्डभक्तिरसदाऽखण्डप्रेमकृपानिधिः ॥ अखण्डरसरूपाढ्याऽखण्डसौन्दर्यशालिनी ॥ ४ ॥ अखण्डसुखशोभाढ्याऽभीष्टसौख्यविधायिनी ॥ अनन्ता ऽ नन्तविजयाऽतुल्याऽतुल्यगुणान्विता ॥ ५ ॥ अर्केन्द्वग्निसहस्राभाऽलक्ष्याऽलंकारशोभिता ॥ अनर्घ्यमणिमञ्जीरा ऽसंख्यशक्त्यधिनायिका ॥ ६ ॥ असंख्यातसमुद्धाराऽसंख्यरूपावतारिणी ॥ असंख्यदुःखनिर्नाशा चार्बुदाचलवासिनी ॥ ७ ॥ अनेनचित्तगाऽचिन्त्य महिमाऽचपलप्रिया ॥ अलौकिकातिसुभग स्वरूपाद्वयरूपिणी ॥ ८ ॥ अहन्ताममताहन्त्री ह्यखण्डाऽहंस्वरूपिणी ॥ अलिप्तद्वैतमालिन्याऽद्वितीयाकारकारिणी ॥ ९ ॥ अछेद्याभेदसुखदाऽनवद्याऽखिलरूपिणी ॥ अल्पकालेष्टदाऽनल्पधनधान्यसुखप्रदा ॥ १० ॥ अत्यन्तपुण्यसंप्राप्तपादभक्तिरहोगुणा ॥ अहोरूपाऽहोचरित्राऽहोबलाऽहोप्रभावती ॥ ११ ॥ अहोस्वज-

नवात्सल्याऽधिकसौन्दर्यसद्गुणा ॥ अधिकाधिकसत्कीर्ति रधिकाधिकशोभिनी ॥ १२ ॥ अधिकाधिकसंदात्री ह्यखिलान्तर्विहारिणी अन्तर्वहिःपूर्णरूपाऽलसद्दृष्टिलसन्मुखी ॥ १३ ॥ अकारादिक्षकारान्तमातृकाक्षररूपिणी ॥ अक्षरक्षरविभ्राजरूपा ऽतीतगुणप्रिया ॥ १४ ॥ अलकालिमुखाम्भोजाऽरविन्दाक्षयऽङ्घ्रिपङ्कजा ॥ अरविन्दकराम्भोजाऽरविन्दाक्षसुपूजिता ॥ १५ ॥ अवदातगुणोदाराऽवदातमणिभूषणा अवश्यभक्तोद्धरणाऽवश्यभक्तसुखप्रदा ॥ १६ ॥ अवश्यभक्तवरदाऽवश्यभक्तजयप्रदा ॥ अनिमित्ताऽविनाभावसंयोगाऽसङ्गसंस्थितिः ॥ १७ ॥ अनुभूतिस्वरूपाम्बाऽवनिपालस्वरूपिणी ॥ अवनीवल्लभाऽवश्या ऽवश्यभाव्यविभाविनी ॥ १८ ॥ अनन्यमानसाराध्याऽनन्यज्ञानविधायिनी ॥ अनन्याधारगाऽनन्यदर्शना ऽनन्यभाषिणी ॥ १९ ॥ अनवद्यलसद्रूपा चानवद्यगुणाकरा ॥ अनवद्यसुधापूर्णाऽनवद्यानन्ददायिनी ॥ २० ॥ अमाना मानज्ञानाढ्याऽरुणचैलवराङ्गिणी ॥ अवन्त्यनलसाऽवन्तीपुरीपीठकृतालया ॥ २१ ॥ अहोरात्रीजागरूका ऽनिमेषा ऽनल्पराज्यदा ॥ अविचारविचाराढ्याऽभिचारभयनाशिनी ॥ २२ ॥ अश्वारोहविलासाढ्याऽश्वग्रीवस्तुतपादुका ॥ अश्वारूढाऽभिवन्द्याङ्घ्रिरश्विनीवैद्यवन्दिता ॥ २३ ॥ अजन्माऽजातपुंस्पर्शाऽखिलसारा ऽखिलर्द्धिदा ॥ अर्हार्हापाङ्गसम्पाताऽभिषिक्तवरसाधका ॥ २४ ॥ अप्रमाणयशोधामा ऽधर्म्मपृष्टाङ्गधारिणी ॥ अविद्यारजनीसूर्य्याऽभ्यासाधिकविभासिनी ॥ २५ ॥ अकाण्डकाण्डसन्द्रावा ऽकिञ्चना ऽकिञ्चनप्रिया ॥ अवितर्क्यविलासा-

ढ्याऽवर्णाश्रमसुपूजिता ॥ २६ ॥ अगस्त्यपूज्यपादाब्जा ऽग-
स्त्यविद्यास्वरूपिणी ॥ अग्निहव्यप्रदाजादिसुरवृन्दसुपोष
णा ॥ २७ ॥ असंख्यातजनोद्धारा ऽसंख्यपापनिपातना अ-
संख्यचरितोपेताऽसंख्यशक्तिसमन्विता ॥ २८ ॥ अकलङ्कक-
लानाथवदनास्मितचन्द्रिका ॥ अगुप्तगुप्तवृत्तान्ताऽन्तरीयतम
नाशिनी ॥ २६ ॥ अजादिकसमाराध्यपदाब्जाराध्यपादुका ॥
अखर्वगर्वशुम्भादिदानवान्तविधायिनी ॥ ३० ॥ अलभ्यला-
भसंप्राप्त्या ऽपवर्गसुखदायिनी ॥ अगराजसुतामूर्त्तिरखिलेप्सि-
तदायिनी ॥ ३१ ॥ अकृत्रिमवचोवेद्याऽकृत्रिमज्ञानरूपिणी ॥ अ-
वश्यभाव्य दुःखघ्नी चान्तकान्तकराऽमला ॥ ३२ ॥ अमूर्द्धाऽसु-
खवृत्ताचालस्यनेत्रसुपङ्कजा ॥ आहार्यदुःखदुर्बोधा ऽविष्कृताने-
कविग्रहा ॥ ३३ ॥ आवितासंख्यसद्भक्ता समुद्रक्षितिराज्यदा ॥
आलयास्याब्जमधुरास्मितरूपमरन्दिनी ॥ ३४ ॥ आब्रह्मस्त-
म्बपर्यन्तकल्पनत्राणतत्परा ॥ आरोहितशिवारावाऽकर्णती-
क्ष्णविलोचना ॥ ३५ ॥ आनन्दघनसंदोहाऽराध्यसेवास्व-
रूपदा ॥ आराध्यसत्कृपाप्राप्याऽदिनाथाकाररूपिणी ॥ ३६ ॥
आवर्णरहिताऽभासाऽभरणाभरणाङ्गिनी ॥ आनन्दाम्बुधिनि-
मग्नाऽ नन्दानुभवकारिणी ॥ ३७ ॥ आखुवाहनसत्पुत्राखु-
यानन्दवेलिहर्षिणी ॥ आखुपत्रात्मरूपाखुनाशिन्याखुगवत्स-
ला ॥ ३८ ॥ आगमोक्तविधानार्चा शीघ्रसिद्धिविधायिनी ॥
आगामिदुःखनिर्नाशा गन्तुकज्वरनाशिनी ॥ ३९ ॥ आ-
काशयुद्धकृन्नाशा काशसंस्पर्शिमस्तका ॥ आकाष्ठाव्यापिसद्धा-
हुलतिका काशवासिनी ॥ ४० ॥ आनमद्भूमिचरणानने-

न्दुवचनामृता ॥ आकीर्णकेशाख्याताख्या नन्दसंफुल्लितानना
॥ ४१ ॥ आधाराधेयभावाढ्या चार्यभक्तकृपावती ॥ आस-
वामृतपानोत्थमदघूर्णितलोचना ॥ ४२ ॥ आगमापायरहिता-
श्रितानन्दविधायिनी ॥ आम्नायसारसर्वस्वा नन्दाम्भोधिस्व-
रूपिणी ॥ ४३ ॥ आधीनपतिकाधीनविश्वत्रयविलाशिनी ॥
आरातिदुःखहरणा रातिदैत्यविनाशिनी ॥ ४४ ॥ आपीनदी-
र्घकठिनस्तनभारनताङ्गिका ॥ आपीनदीर्घवाहस्त्राधरात्मा न-
न्ददायिनी ॥ ४५ ॥ आविष्कृताराातिदया विष्कृतानेकचित्र-
का ॥ आब्रह्मकीटपर्यन्तजगज्जननतत्परा ॥ ४६ ॥ आसवा-
मृतसंपूर्ण पानपात्रकराम्बुजा ॥ आभ्यन्तरीयान्धकारद्वादशार्क
प्रकाशिनी ॥ ४७ ॥ आशापूर्णकरायालसंलभ्याशुकृपावती ॥
आज्ञासिद्धिकराज्ञप्तशिवदौत्या भवाकरा ॥ ४८ ॥ आमूलब्र-
ह्मरन्ध्रान्त कोटिसूर्यसमप्रभा ॥ इतेतरान्तसंदात्रीदत्तनेत्रे
नरूपिणी ॥ ४९ ॥ ईश्वरार्द्धाङ्गसंस्थाने श्वरीवामविलोचना ॥
ईश्वरेशेश्वरान्तस्थेशमूर्त्यष्टकरूपिणी ॥ ५० ॥ ईशिताद्यष्ट-
सिद्धीशेलोद्धृतेऽलास्वरूपिणी ॥ ईश्वरप्रेमसद्भपातोदत्तकर्णम-
नोहरा ॥ ५१ ॥ उमोवाच्योपमाहीनोपमितारमास्वरूपिणी ॥
उग्रप्रभोग्रताराख्या चोग्रचण्डप्रचण्डिका ॥ ५२ ॥ उग्रसे-
नोच्छ्रलितभक्तोज्ज्वलशुभानना ॥ उल्लसत्करुणापूर्णनेत्रक-
लमनोरमा ॥ ५३ ॥ उल्लसत्करपुष्पेपुधरोदधिसुतेश्वरी ॥
उत्तप्तकनकप्रख्योदधिवद्धस्वरूपिणी ॥ ५४ ॥ ऊर्मिहीनोर्द्ध-
लोकस्थोहापतर्कविवर्जिता ॥ ऊरुस्तम्भोरुरूर्द्धाङ्घ्रिरूर्द्धलोक-
निवासिनी ॥ ५५ ॥ ऊर्द्धमार्गोर्द्धसञ्चारोवामकर्णोर्द्धभक्तिदा

॥ ऋत्वराजकृतोत्तंसरत्त्वरासव्यनासिका ॥ ५६ ॥ ऋज्वाश-
यार्जुमार्गस्था चाज्वाशयप्रसन्नता ॥ ऋवर्णसव्यनासाढ्या
लर्णरूपसुभास्वरा ॥ ५७ ॥ लृवर्णदक्षगल्लाढ्या लर्णवामक-
पोलिनी ॥ एवर्णोर्द्धौष्ठसंयुक्ता चैकचक्रप्रवर्त्तिनी ॥ ५८ ॥
एकातपत्रराज्येशा चैकभावविभाविता ॥ एकादशीस्वरूपैक-
छत्रराज्यप्रदायिनी ॥ ५९ ॥ एकाकारसमस्तज्ञैकाग्रचित्तकृ-
तालया ॥ एकभूम्येकजननी चैकदन्तस्वरूपिणी ॥ ६० ॥
एधत्प्रभैकगुर्वेजदनेजद्विश्वनायिका ॥ एकाकारसुसङ्केता चै-
कतत्वप्रदर्शिनी ॥ ६१ ॥ एकान्तपदसन्ध्येया चैकत्वसुख-
दायिनी ॥ एकवीरैषणाशुन्यैषणाशुन्याद्वैतैकधीः ॥ ६२ ॥ ए
कानेकाकृतिश्चैकादशरुद्रस्वरूपिणी ॥ एकादशस्वराकारा
राध्यैकान्तिकभक्तिदा ॥ ६३ ॥ एकान्तपूजनोत्सुक्ययुक्तोप्सि
तविधायिनी ॥ ऐश्वर्यदायिन्यैश्वर्यरूपा चैरावतास्थिता ॥
६४ ॥ ऐकाराणाधरोष्ठाढ्या चैन्द्रयाखण्डलयोगदा ॥ ऐश्व-
रीयजनप्रीताचौंकारमनुरूपिणी ॥ ६५ ॥ ॐकारजपसन्तुष्टा
वूर्द्धदन्तालिसंयुता ॥ ॐकाराधिष्टितौंकाराधरदन्तसुशोभना
॥ ६६ ॥ औचित्योदार्यसंयुक्तौदरदुःखविघातिनी ॥ औपस
र्गिकतापघ्नी चौन्नत्यपददायिनी ॥ ६७ ॥ और्वाग्निकरणाभर-
णस्थापितौर्वस्वरूपधृक् ॥ औद्दालकस्त्रीभावघ्नी चौघवाहन-
वाहिनी ॥ ६८ ॥ आम्बिकांवर्णरसनाञ्जनशून्यांशुमालिनी ॥
अङ्करूपाङ्कनारूपाञ्जनरेखाविलोचना ॥ ६९ ॥ अम्बुध्यगा-
धबोधाख्या चांहोराशिविनाशिनी ॥ अंअोमन्त्रमयीमूर्तिरःक-
गठा कमलालया ॥ ७० ॥ कर्म्मबन्धहराकल्पा कल्याणाकु-

लचेतसा ॥ कमनीयपदाम्भोजा कल्पपर्यन्तसिद्धिदा ॥ ७१ ॥ कवर्णदक्षस्कन्धाढ्या कादिविद्या कलेश्वरी ॥ कमलाभारती रौद्रीमस्तकानतपादुका ॥ ७२ ॥ कमलाभारतीरौद्री रूपिणी कलभाषिणी ॥ कवर्गाद्यष्टवर्गस्था कविलोकसुखप्रदा ॥ ७३ ॥ करात्रिताम्बुजस्वर्णसुधापात्रसुशोभना ॥ कवितारससन्तुष्टा कवितारसदायिनी ॥ ७४ ॥ काव्यारसज्ञतामूर्द्धकम्पिनी कलहंसगी ॥ करुणारसपीयूषकटाक्षेक्षणपाविता ॥ ७५ ॥ कादिदेवकिरीटाग्रसंस्पृष्टपदपङ्कजा ॥ कवितारसचातुर्यदायिनी कादिकादिका ॥ ७६ ॥ कमलापशिरोभूषामणिनीराजिताङ्घ्रिका ॥ कर्मकालुष्यसंहन्त्री कर्माकर्मविलुम्पिता ॥ ७७ ॥ कटाक्षकामजननी कटाक्षशिवमोहिनी ॥ कटाक्षदुःखदारिद्र्यसंहर्त्रीकञ्जहर्षदा ॥ ७८ ॥ कवर्णसर्ववाच्यार्थरूपा कञ्ज करस्थिता ॥ कञ्जपूजनसन्तुष्टा कञ्जाटविविहारिणी ॥ ७९ ॥ खड्गखेटकरा खस्था खरूपा खगगा खगा ॥ खड्गसिद्धिकरी खड्गपाणिमाता खलक्षया ॥ ८० ॥ खप्रकाशा खलाहारा खर्पराढ्यकराम्बुजा ॥ खट्वाङ्गयुधहस्तस्था खञ्जखेलविलोचना ॥ ८१ ॥ खट्वाकारस्थिताजादिदेवपञ्चकसंस्थिता ॥ खण्डखण्डीकृतादेत्या खवर्णकूर्पराङ्किका ॥ ८२ ॥ खर्जूरीकुम्भविलसत्करदेवी खगेश्वरी ॥ खड्गधारासमाकारमार्गरक्षणकारिणी ॥ ८३ ॥ गङ्गाधौतपदीगङ्गारूपिणी गणपार्चिता ॥ गणेशार्चनसन्तुष्टा गणेशाङ्कप्रमोदिता ॥ ८४ ॥ गणेशशोभनाङ्कस्था गणराजातिवत्सला। गदकृमणिबन्धाढ्या गङ्गाधरमहोत्सवा ॥ ८५ ॥ गजकन्या गगयरूपा गगयनामा गणेश्वरी घटस्तनी घटारूपा घनश्याम

स्वरूपिणी ॥ ८६ ॥ घनाघनकृपावृष्टिरसतृप्तिविधायिनी घ-
नाघनकृपावृष्टिरससंतापनाशिनी ॥ ८७ ॥ घटीप्रहरघस्रादि
कालरूपा घनप्रभा ॥ घदत्ताङ्गुलिमूलाढ्या घण्टाघोषारिभी-
तिदा ॥ ८८ ॥ घस्रेशदत्तताटंका घण्टाशब्दहतासुरा ॥ घना-
घनेश्वरीरूपमणिपूरसमाश्रिता ॥ ८९ ॥ घनवल्लीसमानाभा
घनात्ययमहोत्सवा ॥ घनसाराभवर्णाढ्या घनगंभीरनादिनी ॥
॥ ९० ॥ घण्टिकारम्यशब्दाढ्या घटस्था घटरूपिणी ॥ ङव-
र्णदत्तांगुल्यग्रा चण्डिका चपलेक्षणा ॥ ९१ ॥ चपलेन्द्रिय
दोषघ्नी चपलारूपधारिणी ॥ चलदैन्द्रयलकश्रेणिशोभिता
ङ्घ्रिसरोरुहा ॥ ९२ ॥ चलत्पादरणत्पादभूषा चण्डार्त्तिहारि-
णी ॥ चवर्णवामस्कन्धाढ्या चलन्मीनविलोचना ॥ ९३ ॥
चराचरेश्वरी चन्द्ररूपा चन्द्रार्द्धशेखरा ॥ छत्रचामरसंयुक्ता
छत्रचामरदायिनी ॥ ९४ ॥ छलहीनैःसदापूज्या छलच्छलन-
नाशिनी ॥ छलज्ञानप्रदाछन्दोविद्यारूपा छलापहृत् ॥ ९५ ॥
छन्दोमाता छलकरा छन्दोगानसुलोषिता ॥ छवर्णवामकूर्पा-
ढ्या छन्दःस्था छन्दरूपिणी ॥ ९६ ॥ छन्दश्चारीजरामृत्युना-
शिनीजलजस्तुता ॥ जवाम्रमणिबन्धाढ्या जन्ममृत्युजराऽति-
गा ॥ ९७ ॥ जन्ममृत्युक्षयकरी जलजातसुतोज्ज्वला ॥ ज-
गत्संजीविनी जल्पा जगदुद्धारकारिणी ॥ ९८ ॥ जलन्धरा-
दियोगीशरूपिणी जगदात्मिका ॥ जलन्धरादियोगीशमान
सालयसंस्थिता ॥ ९९ ॥ जगत्स्टष्टिर्जगच्चक्रसन्निविष्टा जग
द्गुरुः ॥ जगद्रक्षा जगन्नाथ्या जगत्संहारकारिणी ॥ १०० ॥
जगज्जनहर्षाढ्या जघन्यजनपाविनी ॥ जलभग्नोडुपत्राणा

जङ्गलत्राणकारिणी ॥ १०१ ॥ जटाजूटा जगत्पूज्या जठरा-
नलरूपिणी ॥ जपसिद्धिप्रदा जप्या जनितानङ्गलोचना
॥ १०२ ॥ झङ्कारनूपुरारावयुक्तपादविहारिणी ॥ झङ्कारनूपुरा
रावमनोहरपदाम्बुजा ॥ १०३ ॥ झङ्कारनूपुरारावहंसमौनप्र-
साधिनी ॥ झङ्कारहंसकारावमुषितप्रियमानसा ॥ १०४ ॥
झषध्वजारिमहिषी झषध्वजनमस्कृता ॥ झवामाङ्गुलिमूला-
ढ्या झषरूपसुतर्पिता ॥ १०५ ॥ झषकाव्यङ्कसंयुक्तध्येयपादा-
म्बुजद्वयी झषध्वजशिवाङ्कस्था झषकेतुजयप्रदा ॥ १०६ ॥
झल्लरीनादसन्तुष्टा झर्झरीनादतोषिता ॥ झषकेतुचलन्मी-
नहानिकारिविलोचना ॥ १०७ ॥ झषध्वजधनुस्तुल्यसुन्दर-
भ्रूविलासिनी ॥ झषध्वजशरव्रातगर्वमोचनलोचना ॥ १०८ ॥
ञवर्णवामाङ्गुल्यग्रा टदक्षोर्वङ्कशालिनी ॥ ठदक्षजानुरूपा-
ढ्या ठद्वयाग्निप्रियङ्करी ॥ १०९ ॥ डकारदक्षगुल्फाढ्या डम-
रूरावसाक्षिणी ढदक्षाङ्गुलिमूला च ढक्कारावसुतोषणा
॥ ११० ॥ णकारदक्षपादाढ्याणवाच्यार्थस्वरूपिणी ॥ तार्ण-
वामोरुमूलाढ्या तथ्यभाषणतत्परा ॥ १११ ॥ तडिदम्बरसं-
युक्ता तडिद्वर्णाङ्गिनी तडित् ॥ तडिदम्बरवस्त्राङ्गातच्छीला
तत्परायणा ॥ ११२ ॥ तरलायतदीर्घाक्षी तनुश्रोणिस्तटस्थि-
ता ॥ तडागारामकूपादिसुकर्मसुफलप्रदा ॥ ११३ ॥ तत्वा-
त्मिका तत्पदस्था तल्लक्षणविलक्षणा ॥ तत्वमार्गप्रदा
तत्वदृष्टिस्तत्वविनाशिनी ॥ ११४ ॥ तत्वसंपत्प्रदा तत्वातीत
तत्स्वरूपिणी तरण्यर्बुदतेजःस्था तरणीरूपपादुका ॥ ११५ ॥
तमःसूर्यप्रभा तत्वज्ञानारामविहारिणी ॥ तत्वाऽमृतकृतस्नाना

तत्त्वानन्दसुतत्त्वासिदा ॥ ११७ ॥ तत्त्वानन्दाहारतृप्ता तत्त्वान-
न्दप्रवर्त्तिनी ॥ तन्त्रावतारणी तन्त्रमार्गशीघ्रप्रसादिनी ॥ ११८ ॥
तन्त्रवेदपथारूढा तन्त्रवेदप्रतारिणी तन्त्रवेदसदाचारा तन्त्रि-
णीतन्त्रबोधिनी ॥ ११९ ॥ थकारवामजान्वाढ्या ददन्वेतरगु-
ल्फिनी ॥ दण्डनीदण्डनीतिस्था दण्डदण्ड्यनिपातना ॥
१२० ॥ दण्डनाथार्च्यपादाब्जा दक्षाङ्गशिवरूपिणी दक्षिणा
दक्षपुत्री च दरस्मेराम्बुजानना ॥ १२१ ॥ दयार्द्रीभूतहृदया-
दयापीयूषवर्षिणी ॥ दयादीनार्त्तिसंहन्त्री दयादीनाश्रयप्र-
दा ॥ १२२ ॥ दयादानतपःशौचशुद्धलोकप्रसादकृत् ॥ द-
यारसापूर्णदृष्टि र्दयनीयदयाकरा ॥ १२३ ॥ दण्ड्यादुष्टा द-
यामूर्त्तिं र्दरान्दोलितलोचना ॥ दक्षवामायना दक्षहस्तदर्वी-
सुशोभिता ॥ १२४ दमनोत्सवसन्तुष्टा दलितासंख्यदानवा ॥
दक्षिणारूपिणी दम्भशोकमोहविनाशिनी ॥ १२५ ॥ दक्षि-
णामूर्त्तिसंपूज्या दग्धकामसुजीविनी ॥ दण्डाद्यस्त्रधरा द-
म्भाचारनाशनकारिणी ॥ १२६ ॥ दत्तात्रेयसमाराध्या
दत्तात्रेयस्वरूपिणी ॥ दत्तेष्टा दत्तसन्तुष्टा दरहासोज्ज्वल-
न्मुखी ॥ १२७ ॥ दत्तात्मज्ञानभक्ता च दहराकाशसंस्थिता ॥
दयितादम्पतीरूपा दर्शनीयस्वरूपिणी ॥ १२८ ॥ दर्शयित्री
दर्शनस्था दर्शनीयपदाम्बुजा ॥ दहनाभिधाशब्दमोदा दशवि-
द्यास्वरूपिणी ॥ १२९ ॥ दन्ताबलारावजागरूका दनुजना-
शिनी ॥ दयालुप्रकृतिर्दम्भासुरदुष्टप्रघातका ॥ १३० ॥
धवामांगुलिमूलाढ्या धराधरतपःफला ॥ धराधरेशाविज्ञान
दानन्नाशिततामसा ॥ १३१ ॥ धराधरैकवात्सल्या धराधर

सुपूजिता ॥ धराधरेशवैराजरूपा दर्शनकारिणी ॥ १३२ ॥
धराधरेशवंशोच्चपददात्री धरोद्धृता ॥ धराधरेशसंतान
कल्पवल्लीस्वरूपिणी ॥ १३३ ॥ धराधरेशसंतानदीपिका
धर्म्मरूपिणी ॥ धर्माधर्मविहीनात्मा धर्मध्वजविदूरगा ॥
१३४ ॥ धर्मप्रवर्त्तिनी धन्या धर्म्मादित्रयरूपिणी धर्माश्रया
धर्मज्ञानिर्धर्मैश्वर्यविधायिनी ॥ १३५ ॥ धर्मावतारा धम्मि-
ल्लशोभनीयाननाम्बुजा ॥ धर्मधीराधर्मवृद्धि धर्मकामार्थ
मोक्षदा ॥ १३६ ॥ धर्माधर्महविर्होमकर्तृलोकस्वरूपदा ॥
धनवृष्टिकरी धर्म्या धननाथप्रपूजिता ॥ १३७ ॥ धरणी
नाथसंपूज्या धरणीनाथरूपिणी ॥ धर्मराजशिरोधार्यशास-
ना धर्मवल्लभा ॥ १३८ ॥ धर्ममार्गसमारूढा धर्मध्वेष्यापहा-
रका ॥ धर्मराज्येतिसंहन्त्री धरणीनाथवल्लभा ॥ १३९ ॥ धर्म
पादपसच्छाया दुःखसन्तापनाशिनी ॥ धन्यनामा धन्यगुणा
धन्यचित्रचरित्रिणी ॥ १४० ॥ धन्यभक्ता धन्यमाता धन्य
पुत्रा धरावती ॥ धन्यप्रिया धन्यलोका धन्यपादाब्जपूजिता
॥ १४१ ॥ धन्यमानससंयोगा धन्यदृङ्मूर्त्तिदर्शना ॥ धन्य
जिव्हा गुणगणा धन्यमस्तकवन्दना ॥ १४२ ॥ धन्यपाद
प्रक्रमणा धध्यहस्तार्चनाक्रिया ॥ धन्यकर्णगतागीता धन्य-
त्वक्पादरेणुका ॥ १४३ ॥ धन्यनासापादगंधा धन्यान्तरक-
रणास्थिता ॥ धन्योदरप्रसादान्ना धन्यसर्वसमर्पिता १४४ ॥
धन्येष्टदेवता धन्यवंशप्रपदपूजिता ॥ नकारवामाङ्गुल्यग्रा
नवदुर्गास्वरूपिणी ॥ १४५ ॥ नवीनानन्दसंदोग्ध्रि नवावर
णरूपिणी ॥ नवीनयौवनारूढा नवीनोदयकारिणी १४६ ॥

नवीनाह्लादसद्भक्ता नवीनाह्लादसत्प्रिया ॥ नवीनाह्लादसन्दानप्रियप्रीतिविवर्धिनी १४७ ॥ नवचक्रेश्वरीरूपा नवनाथ स्वरूपिणी ॥ नवचक्रसमारूढा नवीनरसदायिनी ॥ १४८ ॥ नवीननवनीतांगी नवीनरसरञ्जिता ॥ नवरात्रसमाराध्या नवरात्रमहोत्सवा १४९ ॥ नवरूपधरा नन्दा नकुलेशीविभूतिका नरनारायणाराध्या नरनारायणाकृतिः ॥ १५० ॥ नवग्रह स्वरूपाच नवधाभिन्नरूपिणी ॥ नवाङ्कुरूपिणी नव्यवेषाकृतिमनोहरा ॥ १५१ ॥ नवीननीरदश्यामा नरमुण्डविभूषणा ॥ नक्तवृतानस्यपादा नक्तपूज्या नराकृतिः ॥ १५२ ॥ नरसिंहाकृतिर्नक्तवीरमण्डलाचिन्तिता ॥ नवरत्नेश्वरीरूपा नवरत्नप्रपूजना ॥ १५३ ॥ नवपल्लवहस्ताढ्या नवरत्नसुपूजिता ॥ नक्षत्रमालिका नक्रकेतुपक्षप्रवर्तिनी ॥ १५४ ॥ नगभिन्नमनीयांघ्रि र्नगभिद्राज्यदायिनी नवीनकुन्दकलिका दन्तपंक्तिसुशोभना ॥ १५५ ॥ नवीनमाल्लिकाफुल्लगुछहासावभासिनी ॥ पकारदक्षपार्श्वस्था पक्वबिम्बफलाधरा ॥ १५६ ॥ पशुपाशहरा पर्णाहारवर्ज्यतपस्करी ॥ पद्महस्ता पद्ममाला पद्मोदयकरी परा ॥ १५७ ॥ परानन्दकलापूर्णा परप्रेमपयोनिधीः ॥ परमेशीपरावाणी पराशक्तिस्वरूपिणी ॥ १५८ ॥ पराक्षरमयी पक्वयोगिमानससंस्थिता ॥ परात्परतरा पद्मा परमात्मस्वरूपिणी ॥ १५९ ॥ पश्यन्तिवैखरीभाषारूपा पद्मासनस्थिता ॥ पद्मावती पराख्याता परार्दनपरायणा ॥ १६० ॥ परमन्त्रभेदनीपर्वपूजकानन्द दायिनी ॥ पन्नगारिभुजाकारकर्णरत्नविभूषणा ॥ १६१ ॥

पवित्रपरमज्ञाना पद्‌भूषणराविणी ॥ परशुरामसमाराध्या परशुरामस्वरूपिणी ॥१६२॥ पवित्रमानसाराध्या पवित्रद्रव्य पूजना ॥ परस्वभेदरहिता परमापरसद्गतिः ॥ १६३ ॥ परनिन्दापरद्रोहिविमुखापरमोज्ज्वला ॥ पन्नगेशागण्यगुणा पन्नगेशाङ्घ्रिभूषणा ॥ १६४ ॥ पवित्राङ्घ्रिवुडुपत्रातासंख्य-भक्तयशास्विनी। फकारवामपार्श्वस्था फलदात्रिः फलप्रदा १६५ फट्पल्लवसंयुक्ता मन्त्रजापारिनाशिनी ॥ फणीश्वरकला- फल्गुदन्ता फलवती फला ॥ १६६ ॥ फल्गुप्रिया फलन्नामा वन्धुजीवारुणाधरा ॥ वंहिष्टप्रदावन्धनाशिनी वर्वरालका ॥ १६७ ॥ वलदेवोपास्यदेवी वलिवन्वनकारिणी ॥ बहुमार्गैकसंगम्या वहुरूपावलप्रदा ॥ १६८ ॥ वहुशास्त्रैकसिद्धान्ता वहुनाट्यसुनर्त्तिनी ॥ वकासुरारिभगिनी वकहन्तृस्वरूपिणी ॥ १६९ ॥ वकारपृष्ठभागाढ्या वन्धुककुसुमप्रभा ॥ वर्हावतंस भूषाढ्या वर्हिवाहनलालना ॥ १७० ॥ वलिराज्यार्चनप्रीता वहिरंतस्तमोहरा ॥ वहिःश्चान्तःस्थितावद्धदुष्टदैत्यारिवृन्दका ॥ १७१ ॥ भण्डपुत्रासुदिरहः प्रकार्त्रिककुमारिका ॥ भक्तवा-त्सल्यसंयुक्ता भक्तभीतिविनाशिनी ॥ १७२ ॥ भकारनाभि-भागाढ्याभव्यमानससंस्थिता ॥ भव्यभावाभक्तिनिधिर्भक्तसर्व स्वरूपिणी ॥ १७३ ॥ भक्तिप्रावल्यपापिष्ठजनोद्धरणतत्परा भक्तविद्याभगवति भवपापविमोचिनी ॥ १७४ ॥ भगवत्का-मराजाङ्कसमारूढा भवप्रिया ॥ भवान्तरमणी भव्या भगव-त्कामपूजिता ॥ १७५ ॥ महामहीपसंहारा महामहिमशा-लिनी महामहानिधिर्मन्त्रतन्त्रयन्त्रस्वरूपिणी ॥ १७६ ॥

मत्स्यध्वजादिरेखाङ्कस्वलङ्कृतपदाम्बुजा ॥ मरणत्राससन्दा-
त्री मरणत्रासनाशिनी ॥ १७७ ॥ मधुपानसमुल्लासा मार्ण-
रूपामहोदरा ॥ मधुपानैकचित्तान्तस्थिता मधुमतीमही १७८
मनोवचःकायकर्म कृतसर्वसमर्पणा प्रत्यर्पितात्ममन्त्रेशी
मन्त्रशिद्धिविधायिनी ॥ १७९ ॥ महाप्रलयसंस्थात्री महन्मा
न्या महद्गतिः ॥ महेश्वरमहानृत्यसाक्षिणी मानदायिनी ॥
१८० ॥ यज्ञप्रिया यज्ञरूपलोकलीलाविलासिनी ॥ यज्ञभागहरा
यज्ञनाथायशःप्रवर्त्तिनी ॥ १८१ ॥ यज्ञघ्नी यज्ञफलभुक् यज्ञपा-
कस्वरूपिणी ॥ यज्ञभागप्रदा यज्ञफलदानपरायणा ॥ १७२ ॥
यज्ञपूर्णाकराभिख्या यमराजभयापहृत् ॥ यशस्तीर्था यशोल-
भ्या यशोभूषणभूषिता ॥ १८३ ॥ यशःपवित्रजगती यशो
धवलितप्रिया ॥ यत्वचायज्ञसंहारप्रादुर्भूता यशोऽमला १८४
रसरूपा रसप्रीता रसमूर्तीरसप्रिया ॥ रसालया रसज्ञरी
रसपूर्णा रतिप्रिया ॥ १८५ ॥ रणप्रियारणोत्साहा रणजैत्री
रणारिहृत् ॥ रणाचलाचलपदा रणभूमिसुशोभिता १८६ ॥
रणाहतासङ्ख्यदैत्या रम्यारणजयप्रदा ॥ रमावाणीसहचरी
रमणीयगुणार्णवा ॥ १८७ ॥ रकाररुधिरारक्ताम्बरभूषणधा-
रिणी ॥ रक्तवर्णारक्तदन्ती रमणीयासुधासुवाक् ॥ १८८ ॥
लवादिकल्पपर्यंत कालरूपा लयातिगा ॥ लक्ष्मणाग्रजरूपा-
ख्या लक्ष्मणाग्रजसौख्यदा ॥ १८९ ॥ लक्ष्मणाग्रजसंपूज्य
पादपद्मा लसत्पदा ॥ लकारपलला लक्ष्मीलास्यलीलाविनो
दिनी ॥ १९० ॥ लक्ष्मीवाणीप्रदा लब्धरूपसौभाग्यसत्पतिः
लक्ष्मीवाणीस्वरूपाख्या ललन्तीशोभितानना ॥ १९१ ॥

ललितालब्धविज्ञाना लब्धाहंकृतिदूरगा ॥ लसद्रूपा लसत्तेजा
लसच्छासनशासना ॥ ११२ ॥ लसल्लक्ष्मीनाथरूपपालनीय
जगत्रयी ॥ लक्ष्मीनाथशिरोधार्यस्वलङ्कृतपदाम्बुजा ११३
लक्ष्मीनाथसुपोपाख्य कर्मदत्तस्वशक्तिका ॥ लसत्संसारश्रीच-
क्रनगरश्रीमहेश्वरी ॥ ११४ ॥ लयहीना लयकरी लसत्की-
र्त्तिमनोहरा ॥ वमेदोधातुसंयुक्ता वंबीजाक्षररूपिणी ११५ ॥
वह्निप्रियावह्निमुखा वह्निरूपा वरप्रदा ॥ वह्निसंजीवनीवह्नि
वासिनी वसुरूपिणी ॥ ११६ ॥ वज्रदन्तावज्रनखा वह्नि
ज्वालासुमालिनी ॥ वज्रकान्तिर्वज्रधरा वरदानधुरन्धरा ११७
वरुणास्त्रधरा वर्मरूपा वर्षीयसीवरा ॥ वनमालाधरा वन्यभी-
तिघ्नी वरुणात्मजा ॥ ११८ ॥ वनदुर्गवरान्तःस्था वरवाहन
संस्थिता ॥ वरविद्या वरनिधिर्वराह्लाङ्ग स्वरूपिणी ११९ ॥
वररूपा वसुमती वरवीणाविराविणी ॥ वचोतीता वर्णमूर्त्ति
र्वर्गाष्टकसंस्थिता ॥ २०० ॥ वक्रनेत्रा वक्रमार्गा वक्रभ्रूर्व-
क्रवीक्षणा ॥ वसन्तत्वार्कलिर्वन्द्या वन्दनीयपदाम्बुजा २०१
शर्वध्येयपदाम्भोजा शर्वप्रोक्तार्चनक्रमा ॥ शरत्पूर्णेन्दुशोभाढ्या
शरच्चन्द्रप्रभाहरा ॥ २०२ ॥ शरदर्चनसन्तुष्टा शरणागतवत्स
ला ॥ शत्वानन्तानन्तभुजा शरदभ्रस्मितानना ॥ २०३ ॥
शर्वक्ष्वेडजतापघ्नी शर्वप्रियजनप्रिया ॥ शवर्णास्थिस्वरूपाढ्या
शक्तिसृष्टिविनोदिनी ॥ २०४ ॥ शक्तिग्राहकसत्पुत्र चरित्रा-
ह्लादसंयुता ॥ शक्रराज्यप्रदा शक्रवधूटीसुविभूतिका २०५ ॥
शक्रवाहनहस्तोरुयुगला शक्रजिज्जया ॥ शङ्खपद्मनिधिद्वारपार्श्व-
स्था शक्तिरूपिणी ॥ २०६ ॥ शक्रगोपप्रभा शक्रपदमुक्तिप्रदा-

यिनी ॥ शङ्कातङ्कहरा शम्यकृतभक्ता शतेक्षणा ॥ २०७ ॥
शतसाहस्रचित्राढ्यस्वरूपा शम्भुमोहिनी ॥ शनैश्चरपदाशब्द
ब्रह्मरूपाचशर्मदा ॥ २०८ ॥ शरदाद्यर्चनप्रीता शम्भुमानस
हंसिका ॥ शङ्करीशङ्करोरस्था शबरीरूपधारिणी ॥ २०९ ॥
शम्पालतासवर्णाङ्गी शरभीरूपधारिणी ॥ शतसाहस्रचित्राढ्य
मणिद्वीपनिवासिनी ॥ २१० ॥ शर्बरीनाथसंलेख्या शशिभा-
लसुशोभिता ॥ षडाननादिधात्रीशरूपा षड्रूपधारिणी २११
षडूर्मिरहिताकारा षमज्ञा षष्ठिरूपिणी ॥ षट्धाविन्याससं-
युक्त देहन्यस्तस्वकालया ॥ २१२ ॥ षड्रतुस्थितिसंयुक्त सर्व
कालस्वलोकिनी ॥ षड्चक्रभेदनप्राप्त सप्तमस्थशिवामृता
॥ २१३ ॥ षड्जादिस्वरसंयुक्त गानविद्यामनोहरा ॥ षड्जादि
स्वरसङ्गेयातिपवित्रचरित्रका ॥ २१४ ॥ षडंगदेवताकारा
षडाधारस्वरूपिणी ॥ षड्जादिस्वरसंगानरसज्ञाषडूर्मिहत्
॥ २१५ ॥ षड्विकारविहीनात्मभक्ताषड्भाववर्जिता ॥ षड्प्र-
कारभगाभातिः षड्प्रकारभगप्रदा ॥ २१६ ॥ सतीसमासार्ग
शुक्रा सच्चिदानन्दरूपिणी ॥ सन्मानदानसन्तुष्टा सत्सु संप-
त्प्रदायिनी ॥ २१७ ॥ सच्चित्तत्वमसीत्यादिवाक्यबोधस्वरू-
पिणी ॥ सच्चित्तत्वमसीत्यादीवाक्यबोधप्रदायिनी ॥ २१८ ॥
सत्यसौचादिसंयुक्त स्वकीयजनचित्तगा ॥ संयुक्तायुक्ततार्तीय
बीजजप्यार्थसिद्धिदा ॥ २१९ ॥ सत्यादिपातिदैवत्य कला
सत्यप्रियंवदा ॥ सत्याकृतिः सत्यसन्धा सत्यमार्गप्रवर्तिनी ॥
२२० ॥ सद्यस्त्राणकरीसन्ध्या ध्येयसत्यपदाम्बुजा ॥ सर्वदा
ध्येयसत्पादा सचराचररूपिणी ॥ २२१ ॥ सङ्कष्टतारिणीसभ्य

गुणस्तोमप्रदायिनी ॥ सङ्कोद्धारकृन्मार्गा सङ्गेयगुणगौरवा ॥ २२२ ॥ सङ्गीतयोगिनीगेयचित्रनामावलीशुभा ॥ संगीतविद्याधिष्ठात्री सङ्केतार्थप्रकाशिनी ॥ २२३ ॥ सङ्कोच-सुविकाशाख्या संकर्षणसहायिनी ॥ सङ्गीतविद्यासन्दात्री सर्वभूतदयाकरी ॥ २२४ ॥ संजीवनी सदाचारा सम्मेलन सुकारिणी ॥ संकल्पकरुणाक्रिडा सम्मनोल्यङ्घ्रिपङ्कजा २२५ हंसस्वरूपा हंप्राणा हनुमत्प्रीतमानसा ॥ हरिणाक्षीहरिदश्व-दक्षलोचनसंस्थिता ॥ २२६ ॥ हरिन्मुखी हरावास गिर्य्या-वासहलायुधा ॥ हर्यासना हरत्पापा हरिदक्षस्थलाश्रया ॥ २२७ ॥ ळंजीवात्माळंस्वरूपा क्षवर्णपरमात्मिका ॥ क्षत्रिय क्षयकृत्गर्वमोचना क्षत्रपार्चिता ॥ २२८ ॥ क्षत्रियस्वभुजा क्षत्रीश्वरपूज्यपदाम्बुजा क्षमेरुमालिकामन्त्र जपवह्निष्टदायि-नी ॥ २२९ ॥ क्षणभङ्गुरसंप्राप्यसत्प्रसादा क्षमावती ॥ क्षणप्रभाचलाभासा क्षंतव्यात्मा क्षमाम्बुधिः ॥ २३० ॥

इतिश्री परम्बाया अकारादिसहस्रनाम समाप्तम् ॥

श्रीसर्वेश्वरीविजयतेतराम् ॥

---

ॐ वृह्मरन्ध्रस्थितादेवी गुरुरूपापरात्परा ॥ श्रीचक्रमध्य विन्दुस्था मस्तकं मे सदावतु ॥ १ ॥ निटिलस्था ललाटं मे भ्रुवौ भ्रूस्थावतात्सदा ॥ नेत्रस्थाव्यान्नेत्रायुग्मं रविचन्द्रस्व-रूपिणी ॥ २ ॥ नासास्थितानासिकांमे दस्रदेवस्वरूपिणी ॥ गराडस्या गराण्डयोर्युग्मं कर्णौ मेदिक्स्वरूपिणी ॥ कर्णस्था

पातुमेनित्यं मुखं मुखगतावतु ॥ ओष्ठस्थिता मेऽव्यादोष्ठौ बिम्बोष्ठाभा सनातनी ॥ ४ ॥ दन्तान्दन्तस्थिता मेऽव्याद्रक्त दन्तसुशोभना ॥ जिह्वां जिह्वालया देवी वाणीं वाणीगता वतात् ॥ ५ ॥ दंष्ट्रागा मेऽवताद्दंष्ट्राः कालरूपकरालिनी ॥ तालुगाऽव्यात्तालुदेशं कण्ठान्तःकण्ठगाऽवतु ॥६॥ चिबुकादश गाऽव्यान्मे चिबुकंकण्ठगाऽवतु॥ कंठदेशंकालिकाख्या कन्धरां कन्धराश्रया ॥ ७ ॥स्कन्धस्थास्कन्धयोर्युग्मं भुजौ बाहुगताऽवतु ॥ कूर्परस्थाकूर्परयोर्युग्मं रक्षतुसर्वदा ॥ ८ ॥ मणिबन्धगतादेवी मणिबन्धौचरक्षतु ॥ करपृष्ठगतादेवी करपृष्ठं च रक्षतु ॥ ९ ॥ तलं मे हस्तयोर्देवी करस्थाऽवतु सर्वदा॥ अङ्गुष्ठाङ्गुलिगाङ्गुष्ठाङ्गुलीर्मेऽव्यान्महेश्वरी॥ १० ॥ नखस्थामेऽवतादेवी नखान् वज्रस्वरूपिणी ॥ वक्षस्थलगता वक्षो हृदयं हृद्गताशिवा ॥ ११ ॥ पार्श्वस्थापार्श्वयोर्युग्मं मम रक्षतुसर्वदा ॥ उदरंचोदरस्थामे नाभिस्थानाभिमण्डलम् ॥ १२ ॥ कटिस्था रक्षतुकटिं पृष्ठं रक्षतुपृष्ठगा ॥ नितम्बस्था नितम्बौ मे गुह्यंगुह्यगताऽवतु ॥ १३ ॥ मेढ्रं मेढ्रगतारक्षेद्वृषणौ वृषणस्थिता ॥ ऊरुष्ठाचोरुयुग्मं मे जानुगाजानुयुग्मकम् ॥ १४ ॥ जङ्घेजङ्घगतामेऽव्यात् गुल्फस्थागुल्फयुग्मकम् ॥पादपृष्ठगता पादपृष्ठयुग्मंसदावतु ॥ १५ ॥ पादाङ्गुष्ठाङ्गुलिष्ठावा पादाङ्गुष्ठाङ्गुलीर्मम ॥ अङ्घ्र्योस्तलयुगंरक्षे दङ्घ्र्योस्तलनिवाशिनी ॥ १६ ॥ शिरोरुहगता रक्षेन्मम केशान्सुरेश्वरी ॥ श्मश्रुष्ठामे सदारक्षेत् श्मश्रुप्रणतपालिनी ॥ १७ ॥ लोमान् लोमगतापातु सूक्ष्मान् सूक्ष्मतरापरा ॥ रोमकूपगतादेवी रोम-

कृपान् सुरक्षतु ॥ १८ ॥ त्वचं त्वग्गामिनी रक्षेद्रक्तं रक्तनिवासिनी ॥ मांसं मांसगता पायान्मेदोमेदगता सती ॥ १९ ॥ अस्थिष्टाह्यस्थिसंघंमे मज्जां मज्जाश्रयावतु ॥ शुक्रं रक्षतुशुक्रस्था प्राणान्प्राणगताऽवतु ॥ २० ॥ मनोबुद्धिगतारक्षेन्मनोबुद्धी सदाम्बिका ॥ चित्ताहंकृतिगारक्षे च्चित्ताहंकारकौमम ॥ २१ ॥ आत्मानं सततं रक्षेत्सदाजीवात्मरूपिणी ॥ शरीरान्तर्बहिर्देहान्तर्बहिःष्ठासदावतु ॥ २२ ॥ एकरूपा सदा पूर्णा नानाकृतिधरा परा ॥ व्याप्यव्यापकरूपामां लीलया सर्वदाऽवतु २३ ॥ इतीदं कवचं पुण्यं ज्ञानरूपं पठेन्नरः ॥ देहरक्षां ज्ञानवृद्धिं शुद्धभावं प्रयच्छति ॥ २४ ॥ परात्परतरादेवी पुत्रवत्परिपातिसा ॥ महाभये व्याधिभीतौ पठतां न भयंभवेत् ॥ २५ ॥

इतिश्री न्यासकवचात्मकं स्तोत्रम् समाप्तम् ॥

---

## अथ प्रातःस्मरणम् ॥

ॐ प्रातःस्मरामि शिवविष्णुविरञ्चिवन्द्यं वज्रध्वजाब्जशृणिचिह्नितमम्बिकायाः ॥ पादाङ्गुलीयमणिनूपुररम्यरावं पादारविन्दयुगलं परदेवतायाः ॥ १ ॥ वाग्देवता गिरिसुता कमलामहेंद्री वक्रालकावलिमलिन्दसुशोभितालीं ॥ संशोभितं भुवनभासितमादिरूपं प्रातःशिवाचरणकञ्जयुगं नतोऽस्मि ॥ २ ॥ संसारसिंधुतरणाय तरीस्वरूपं स्वेच्छानुरूपफलदंभजतां जनानाम् ॥ उद्यत्सहस्ररविरोचिरलंप्रकाशं प्रातर्भजामि

पदकञ्जयुगं परायाः ॥ ३ ॥ रत्नत्रयमिदं स्तोत्रं प्रातःप्रातः पठेन्नरः ॥ मनोभिलषितंमाता दद्यादन्ते निजंपदम् ॥ ४ ॥

इतिश्री पादारविन्द रत्नत्रयस्तोत्रं समाप्तम् ॥

---

॥ श्रीः ॥ स्रवत्सुकरुणारसो मनसितत्त्वसंपादक स्तवाऽतिकरुणार्णवे जनवरस्यभक्तस्यते ॥ गुरुप्रियकरस्थ हे जननि दृष्टिपातःशिवे मयि प्रणमति त्वयि प्रकटयैव कारुण्यतः ॥ १ ॥ हित्वा स्वकीयं जगदम्बिकेते कृष्णावतारो निजदास दासः ॥ प्रतिश्रुतं भीष्ममहावृतस्य जुगोप यः सोवतु मां महात्मा ॥ २ ॥ दुर्गेपराते रगुनाथमूर्त्ति द्वारागुरोर्वाक्परिपालनस्य ॥ स्वयं स्वतन्त्रापिवनंजगाम या सावताद्धर्मसहाय कामाम् ॥ ३ ॥ भूयाच्छिवायाम्बतवाद्भुताकृतिर्नृसिंहनाम्नी खरकोपधारिणी ॥ नखैर्हिरण्योदरदारणी त्वरा सुभक्तप्रह्लादशिवप्रदायिनी ॥ ४ ॥ अवतार चरित्रम् समाप्तम् ॥

---

श्रीमच्चरणशरण दायिनी विजयतेतराम् ॥

श्रीमच्चन्द्रमरीचिहासवदने प्रोत्फुल्लनेत्रद्वये भालार्द्धेंदुलसत्तृतीयनयने चंद्राभगल्लस्थले ॥ चंपापुष्पसुनासिका धृतलसन्मुक्ताफलाभूषणे त्वत्पादांकितमम्बिकेस्तुचसदा मे मस्तकं मानसम् ॥ १ ॥ श्री बिम्बाधरचुम्बिमिष्टहसिते श्रीकल्पवल्लीभुजे हस्ताब्जात्तधनुः शरांकुशगुणे माणिक्यकुम्भस्तने ॥ रुद्रब्रह्मजनार्द्दनैकदशन क्रौंचारिपीतस्तने त्वत्पादांकितमं० ॥

२ ॥ चंचत्कांचन किंकिणी विलसित श्रोणीतटालंकृते
स्वद्देवकिरीटरत्न किरणैर्नीराजितांघ्रिद्वये ॥ उद्यद्भास्करके
धामविलसत्स्वीयांगशोभाभरे त्वत्पा० ॥ ३ ॥ सूर्येंद्वग्नि
लोचने परशिवोल्लासेगुणालंकृते जाड्यध्वांतरविप्रभे भजन
संसारपारप्रदे ॥ दैन्यछेदिसुरद्रुमस्वचरणे ज्ञानामृतस्पं
त्वत्पा० ॥ ४ ॥ पद्मवृन्दकृतासन प्रभुशिव क्रीडाविलासे
श्रीवाणीवरवीजिताङ्गलतिके भंडादिदैत्यार्दिनि ॥ रुद्राणी
लालयाकमलभूशक्त्यर्चितांघ्रिद्वये त्वत्पा० ॥ ५ ॥ एका
गुणावतारचरिताऽखिलयेभयध्वंसिनि श्रीनाथांघ्रिनतिप्र
करुणाद्दष्टेविभूतिप्रदे ॥ भक्ताशाखफलेसुभक्तहृदया वासे
द्भासिके त्वत्पा० ॥ ६ ॥ लक्ष्म्यव्यवहारपूजनसदा स
चित्तेपरे आधिव्याधिजरामृति प्रदलिते षट्चक्रसंचारि
कासान्निन्त्रिपुरेजगत्त्रयजनोद्धारेशिवे सद्गते त्वत्पा० ॥
श्रीवाणी धरणीधनाभिजनता प्राज्ञप्रयत्वप्रदे विद्यासद्म
सुवीर्यविलसद्रूपप्रदे मुक्तिदे ॥ ज्ञानागम्यपदे कृताधिक
स्वीयांघ्रिभक्तिप्रदे त्वत्पादांकितमम्बिकेऽस्तुचसदा मे म
मानसम् ॥ ७ ॥ दिव्यंश्रीजगदम्बिकाष्टकमिदं यःप्रेमयु
पुमान् ॥ ध्यायंश्चोपरदेवतांघ्रिकमलं सद्भोगमोक्षप्रदम
वांछासिद्धिकरंपठेद्यदिसदा प्रीणातितस्याम्बिका यद्य
मनोगतं प्रकुरुते सिद्धंचतत्ताछिवा ॥ ८ ॥ इतिश्री शैव
कमलमकरंदमधूपरावराज शोभनसिंहेन कृतं सगुणनि
स्वरूपदर्शनप्रार्थनाष्टकं संपूर्णतामगमत्। शिवमस्तु ॥

त्वन्नामोच्चारणेनैव जिह्वावानहमम्बिके पवित्रयेहंतेनैव जिह्वायांतत्सदास्तुमे ॥ १ ॥ त्वत्पादोत्सृष्टगन्धस्य पुष्पस्य च सुरेश्वरि ॥ आघ्राणाल्लेपनादम्ब त्वचंनासांपवित्रये ॥ २ ॥ श्रोत्रंचरित्रश्रवणाद्वाणीं पाठजपात्तव ॥ करौपादार्चनात्पादौ परिक्रमणातःशिवे ॥ ३ ॥ दृग्दर्शनाच्चतेमूर्त्तेर्नमनात् मस्तकं मम ॥ निर्माल्यधारणात्तीर्थीकुर्वेतीर्थपदाम्बुजे ॥ ४ ॥ दासोऽहमित्यहंकारं चित्तंचरणचिंतनात् ॥ मनस्यंघ्र्योरवस्थाने करणान्मानसंमम ॥ ५ ॥ बुद्धिंतेपादपोधान्मे दंडवत्पतनाच्छिवे ॥ अंघ्र्योःप्रणामान्निखिलं शरीरंपावयाम्यहम् ॥ ५ ॥ आत्मानमात्मभावात्ते स्वरूपस्यपराम्बिके ॥ कोटिसूर्याविभासस्यकोटीशीतांबुशीतलात् ६ ॥ पवित्रयेहंललिते ततोयास्याम्यनुत्तमं तेपदंस्वात्मचिद्रूपे सर्वानंदमयंपरम् ॥७॥ इतिश्री भक्तसर्वात्म पवित्रीकरणं स्तोत्रं समाप्तम् ॥

श्रीप्रकाशविमर्शसामरस्य स्वरूपिणी श्रीगुरुपादुका विजयतेतराम् ॥

---

ॐ । श्रीगुरुर्नाथ आचार्योदीक्षाविद्याप्रदायकः ॥ शरणागतवात्सल्य कारुण्यरससंयुतः ॥ १ ॥ प्रपन्नपारिजाताङ्घ्रिर्देवदेवोऽखिलर्द्धिदः ॥ अज्ञानभास्करोऽनन्त महात्म्यगुणरूप धृक् ॥ २ ॥ ब्रह्मविष्णुमहेशादि रूपश्रीमत्परात्मकः ॥ पादुका दीर्घतरणा जगज्जलधितारकः ॥ ३ ॥ महावाक्यार्थ तत्वात्मा सेवानिजपदप्रदः ॥ जीवकीटपरापाद पङ्कजालिकरःशिवः

॥ ४ ॥ संसारघर्मसंतप्त संश्रितामृतवर्षणः ॥ निजानुभावसंदृष्टि दासदोषापहारकः ॥ ५ ॥ अहेतुककृपापारपारावारोऽभयप्रदः ॥ निजाङ्घ्रिनतिसंयुक्त समुन्नतिविधायकः ॥ ६ ॥ परापादाब्जसंसेवा नानानन्दप्रदायकः ॥ निजप्रसादसंदान शिष्यशुद्धिविधानकृत् ॥ ७ ॥ मूर्द्धस्थनाथकंजांघ्रि मकरन्द झरीप्लुतः ॥ स्वशिष्यवृन्दकृद्धीरो मन्त्रतन्त्ररहस्यवित् ॥ ८ ॥ सहस्रदलमूर्द्धन्य शुक्लपङ्कजमध्यगः ॥ प्रकाशेन्दुसुधापान परायणप्रसन्नधीः ॥ ९ ॥ अज्ञानचर्वणाशक्त स्वरूपोदय दर्शकः ॥ रोगशोकभयक्लेश हारकोभुक्तिमुक्तिदः १० ॥ शाम्भवीखेचरीमुद्रा दृष्टज्योतिरगाधधीः सान्नागस्थपदःसृष्टिस्थिति संहारकारकः ॥ ११ ॥ वराभयकरोहीर मुक्ताफलविभूषितः ॥ ज्ञानमुद्रापुस्तकाढ्य करकञ्जविराजितः॥ १२ ॥ ज्ञानानन्दप्रसन्नात्मा प्रबुद्धमुखपङ्कजः ॥ प्रफुल्लनयनाम्भोजो महानन्दस्वरूपवाक् ॥ १३ ॥ सर्वस्वदातृसच्छिष्यकरुणाषोडशीप्रदः ॥ सङ्केतसूचना तत्त्वदर्शकोमहिमार्णवः ॥ १४ ॥ वामोत्सङ्गसमारूढ स्वसमानगुणाकरा ॥ रक्तकञ्जधरस्वात्मा शक्तिसंश्लिष्ट देहिकः ॥ १५ ॥ भ्रूभङ्गोद्धृतपापिष्ट परापादाब्जपूजकः ॥ आनन्दानन्दनाथाख्यः शिष्योद्धारावतारकः ॥ १६ ॥ शिवशक्तिसदासाम रस्यानन्दसुभुग्विभुः ॥ शिवशक्त्यैक्यभावस्थ पराक्रमपरायणः ॥ १७ ॥ इदन्तामधुशैवाग्नि होमकृत्परमरूपभृक् ॥ सर्वमङ्गलसन्नामा दुर्ज्ञानेन्धनपावकः ॥ १८ ॥ संकल्पसिद्धिदोजीव सर्वशास्त्रार्थसिद्धिकृत् ॥ सर्वरूपोमहामानुरनन्योदीनवत्सलः ॥ १९ ॥ कृतज्ञकूरकृत्यादि शमनःशान्त

विग्रहः ॥ शुक्लवर्णोरक्तवर्णो गौरोद्विभुजधारकः ॥ २० ॥ शिवदोन्तर्विहारीच द्वैताद्वैतप्रवर्तकः ॥ करुणादृष्टिसंपात प्रपन्नजनतारकः॥ २१॥ एकत्रिनवधानन्त रूपविश्वोपकारकः मतान्तरोत्तमसतो विषामृतविधायकः ॥ २२ ॥ द्विनेत्रत्र्यस्त्र कश्चैव त्रिनेत्रायुगनेत्रधृक् ॥ अनन्तनयनोनन्ता भिख्याकर्मचरित्रकः ॥ २३ ॥ चतुर्भुजोऽनन्तबाहुर्नानाशस्त्रास्त्रधारकः ॥ स्वात्माभिन्नपराशक्ति समुपासनतत्परः ॥ २४ ॥ पराशक्तिरहोपास्ति क्रियाकुशलकारकः ॥ परापादाब्जमधुलिट् च्छिष्यःपरपदाप्तिकृत् ॥ २५ ॥ विश्वतापार्तिहृत्स्वात्म वरहस्तातपत्रकः ॥ पशुपाशहरःसंविद्देशकालातिगोभवः ॥ २६ ॥ जितगुर्ज्ञानरूपात्मा हिलकज्जगतांप्रियः ॥ स्वीयमानसकञ्जालि रतिसूक्ष्मविचारकः ॥ २७ ॥ अनाश्रयाश्रयः स्वस्थो गुणरत्नालयस्त्वधीः ॥ शिशिरोष्णमहातेजःसमुद्रःसर्वदर्शकः ॥ २८ ॥ गुप्तप्रकटमार्गस्थो गुप्ताचारपरायणः ॥ संसारव्यालसन्दष्ट गारुत्मगुणरूपधृक् ॥ २९ ॥ स्वाङ्घ्रिप्रणतदेवकूस्तिमिरावृतभानुमान् ॥ संसारतापसन्तप्तसुधासाराभिवर्षणः ॥ ३० ॥ अष्टोत्तरशतंश्रीमन्नाम्नां निजगुरोः सदा ॥ पठन्नभीष्टंलभते भोगमोक्षात्मकंफलम् ॥ ३१ ॥ पठतोनास्तिदारिद्र्यं न भीतिः कस्यचिद्भवेत् ॥ प्रसादाच्छ्रीगुरोर्जीवो महानन्दमयोभवेत् ॥ ३२ ॥ कविगुणपाठविहीना वाणीरचना हिमामकीस्वामिन् ॥ यद्यपितेविषयातो दोषविहीनेवसतांमुदेभवतु ॥ ६३ ॥ इतिश्री आनन्दानन्दनाथ पूज्यपाद

शिष्य श्रीप्रतिभानन्दनाथ विरचितं श्रीगुर्वष्टोत्तरशतनाम्न संपूर्णम् ॥ ॥ ॐ ॥ ॥ श्री ॥

---

ॐ। मूलस्थितां कुण्डलिनीं सुषुम्णामार्गेण शुक्लाब्जसहस्रपत्रे ॥ चिच्चन्द्रविम्बामृतपानशक्तां तामेवज्वालावदनां नमामि ॥ १ ॥ श्रुतौविगीताखिलविश्वरूपा ज्ञानप्रकाशा हृदिसंनिविष्टा या ब्रह्मरूपा परमात्मशक्तिर्ज्वालामुखी तां मनसा नमामि ॥ २ ॥ यस्याःप्रसादाद्विधि विष्णुरुद्राः कुर्वन्ति विश्वस्य विधानकृत्यम् ॥ कृतान्तवैश्वानर तुल्यदीप्तिं पश्याम्यहन्तां ज्वलनाननाम्बाम् ॥ ३ ॥ धराम्बुतेजो निलखानि यस्याः तत्वानि पंचैव समुद्भवन्ति ॥ रूपाणि यस्याश्च तथेन्द्रियाणी ज्वालामुखी तां० ॥ ४ ॥ मात्रा मनोबुद्धिरहंकृतिर्या चित्तं च जीवं परमात्मतत्वं ॥ लीलार्थमेकैव बहुस्वरूपा ज्वाला० ॥ ५ ॥ हव्यं च होतारमथानलं च होमंफलं स्वात्मनि या विभज्य एकैवक्रीडत्यनिशंमहेशी ज्वाला० ॥ ३ ॥ या संस्मृताभीतिमपास्य दूरंसुखैकनिष्ठं मनुजं करोति सुबुद्धि दात्री भवति प्रसिद्धं ज्वालामुखी० ॥ ७ ॥ यस्यां मनोन्यस्य सुयातियोगी संसारपारं परमं प्रकाशम् ॥ पदंध्रुवंनित्यमनामयंतत् ज्वालामुखी तां मनसानमामि ॥ ८ ॥इत्यष्टकं श्री ज्वलनाम्बिकायाः भक्तः पठेत् ध्यानकरः सदायःसयातिदिव्यं परदेवतायाः पदंप्रकाशात्मकमात्म शक्तेः ॥ ९ ॥ इतिश्री ज्वालामुखीस्तोत्रं सपूर्णम् ॥ श्रीरस्तु ॥ श्रीः ॥

श्रीगणेशायनमः ॥ येनेदं सकलं जातं वर्तते हरणं भवेत् ॥ आद्यन्तरहितं श्रीमत् सामर्थ्यं जयतेतराम् ॥ १ ॥ सुष्कं चार्द्रंतथाह्युष्णं शीतं भवति सर्वतः ॥ यत्प्रसादात्सदाश्रीमत्सामर्थ्यं तत्परंनुमः ॥ २ ॥ जलधिः स्थलतां याति स्थलमम्बुनिधिर्भवेत् ॥ ईशोऽज्ञोऽज्ञश्च सर्वज्ञः सामर्थ्यं शरणं नुमः ॥ ३ ॥ त्रयाणां जगतामीशः शिवस्तद्वान् भवेद्यदि ॥ अन्यथा शवइत्येव श्रीसामर्थ्यं भजाम्यहम् ॥ ४ ॥ यदुपासनया योगी संगच्छति परंपदम् ॥ कामी कामं समाप्नोति सामर्थ्यंसंस्मराम्यहम् ॥ ५ ॥ पापं धर्मायते भोगोयोगःस्याद्भजतां नृणाम् ॥ विषं सुधायते श्रीमत्सामर्थ्यं मे प्रसीदतु ॥ ६ ॥ यद्ध्यानाज्जर्जरीभूतो नरोऽनंगायतेऽनिशम् ॥ लालित्यं मोहनंश्रीमत् सामर्थ्यं संस्मराम्यहम् ॥ ७ ॥ विधित्वं चैवविष्णुत्वं रुद्रत्वं भजते स्वयम् ॥ तत्प्रथकत्वं च सर्वत्वं सामर्थ्यं संभजाम्यहम् ॥ ८ ॥ सामर्थ्याष्टकमेवेदं नरः पठति भक्तिमान् ॥ सचालौकिकसामर्थ्यं भवते भुविभाग्यवान् ॥ ९ ॥ त्रिकं पंच त्रिकं षट्दिग्वर्णंचैकाक्षरंपरम् ॥ द्वाविंशत्यक्षरं माभूत् सामर्थ्यं मे पृथकसदा ॥ १० ॥ अस्मद्भाग्यं स्वामिनी मातृरूपं भाग्यं शम्भोः श्रीकलत्रस्वरूपम् ॥ भाग्यंराज्ञःपर्वतानांहिमस्य वात्सल्यस्यस्थानभूतंनतोऽस्मि ॥ ११ ॥ इति श्री सामर्थ्याष्टकस्तोत्रं समाप्तम् ॥

---

श्रीमती सकलान्तर्यामिणी पराम्बा पादारविन्दयोर्मे सर्वदा

मनोलिशिचनमकरन्द लेलिह्यतांतराम् ॥ यांयुद्धेऽगणिता सुराकतिविधाः प्राप्यैवनाकंगता यामाराध्य मुनीश्वराः सुरजनाः सिद्धिंगताः शाश्वतीम् ॥ यां प्राप्यामृतवर्षिणीं निजजनाः सद्योगयुक्त्या मनोयस्याश्चैव निवेश्यतत्फलभुजो रूपंद्वितीयं जहुः ॥ १ ॥ एका परा गुणविहीनविलक्षरूपा प्राचीनविश्वरचना विलया त्वमासीः अग्रेस्वधाम्नि सतितेहि कृपावशेन व्यक्तिर्भवाभिभजतांचशिवाय लोके २ व्यक्तिःशिवाय गिरिजे भजतां नराणां इत्यपिपाठःज्ञानेवराभयकरं विलसत् त्रिनेत्रम् श्रीचन्द्रभालरमणीय विभासमानम् शोणंवपुर्धृतमनादिसदेक रूपे भक्तस्यरागवशतः स्मितशोभितास्यम् ॥ ३ ॥ एकाद्वयं निजविभासविकाशमानं स्वच्छविस्फुरणशालिविबोधरूपम् ॥ यत्तेतदेतदितिशोणमहःस्वरूपं मन्येशिवेघन कृपामृतवर्षहर्षि ॥ ४ ॥ तत्वंशिवं त्रिपुटिहीनमनन्तमाद्य मानन्दरूपमवबोध चिदात्मतन्त्रम् यत्तेस्वरूपमरविन्दविकाशकोटि तेजोह्यहं शरणमम्बसदागतोस्मि ॥ ५ ॥ पञ्चरत्नमिदंस्तोत्रं यःपठेद्भक्तिमान्नरः ॥ ऐहिकामुष्मिकीं सिधिं स्वयंप्राप्नोत्यसंशयः ॥ ६ ॥ धनं धान्यं यशःसौख्यं राज्यंनिहतकंटकम् ॥ ज्ञानविज्ञानसंयुक्तस्वरूपं वनितां सुतम् ॥ ७ ॥ विद्याः कवित्वंलभते परान्वायाः प्रसादतः ॥ असाध्यं सुखसाध्यंच्च भवत्येव नसंशयः ॥ ८ ॥ इतिश्री पञ्चरत्न समाप्तम् ॥

---

श्रीगुरुपादुकाभ्योनमः । श्रीगणेशायनमः ॐ श्रीसरस्वत्यैनमः । ॐ श्रीमती सकलान्तर्यामिणी वागमृतवर्षिणी

विजयतेतराम् ॥ ॐ गलद्रक्तमुण्डं कृपाणीं ह्यभीतिं वरं संदधाना करैरम्यरूपैः ॥ गलत्सृक्किणी रक्तधारामुखाब्जा मवन्तीं जनान्स्वान् भजे श्यामलाम्बाम् ॥ १ ॥ शवाकार शम्भुस्थितां सामरस्य प्रमोदां सदा चन्द्रमौलिं त्रिनेत्राम् ॥ लसत्स्मेरवक्त्रां विवासाविलासां प्रतित्वां प्रपन्नोऽस्मि भक्तार्तिहंत्रीम् ॥ २ ॥ त्वमेकैव विश्वस्य माता विधात्री तथा संहरीभोगमोक्षैकदात्री ॥ घनश्यामलांगी कृपापूर्णदृष्टिःस्थिता मन्मनस्तावके धाम्निभूयाः ॥ ३ ॥ त्वदीये पदाब्जे प्रपन्ना जना ये मनोभीष्टदानप्रवीणेन तेषाम् ॥ कृपालोकनात् ते हि मातर्भयं नो मृतिर्नैवरोगो न शोकोभवानि ॥ ४ ॥ सदासद्विलासः सदासद्विमर्शः सदादानकर्ता सुपात्रेस्वतन्त्रः सुखीवीर्यसौन्दर्यशाली सुभक्तः कविर्ज्ञानवांस्ते कटाक्षावलोकी ॥ ५ ॥ पञ्चरत्नमिदं स्तोत्रं नरः पठति नित्यदा ॥ शिवा कृपाकटाक्षार्थी ध्यानकृच्चेष्टमाप्नुयात् ॥ इति पञ्चरत्नस्तोत्रं समाप्तम् ॥

---

श्रीमत्पराभैरवो विजयतेतराम् ॥

नित्यःशुद्धः सुबुद्धः परमहितकरोलीलयाबालरूपः शूलं दण्डंदधानः स्फटिकवररुचि श्चन्द्रचूडस्त्रिनेत्रः आपभ्द्यः संप्रमोक्ता निजशरणगतान् संप्रयोक्ता सुखानां कालःपालस्त्रि-

लोकयाः परमविधिकरो भैरवःशङ्करोऽस्तु ॥ १ ॥ भैरवभैर-
वभैरव भजतां न्हणांभयं कुत्र॥ सूर्य्यस्योदयसमये लेशस्त-
मसो नविद्यते जगति ॥ २ ॥ आपद्विलंयातिहि आपत्संसार
नामतः सद्यः ॥ शङ्करइतिसंपठनात्सर्वसुखं समुपजायतेशी-
घ्रम् ॥ ३ ॥ भैरवइतिसंभजनाद्भवविघ्नं दूरतोयाति ॥
सर्वत्रसर्वदावैसिद्धिः कार्यस्य नृणांभवति ॥ ४ ॥ भूतनाथ
इतिभजनाद्भूतावशवर्तिनस्तेषाम् ॥ भूतात्माधठमानवसर्वे-
ऽप्यश्चेच्छसीष्टत्वम् ॥५ ॥ भवतिजनानांवृद्धिःपठनाद्वैभूतभाव-
नोनाम्नः ॥ क्षेत्रज्ञाभिख्यातोदेहं जानाति नात्मनोरूपम् ६ ॥
क्षेत्रपालइतिपठनाद्भवतिजनः सक्तिभागचिरात् ॥ क्षेत्रदइति
संपठनाल्लभेदिलां धान्यशस्याढ्याम् ॥ ७ ॥ क्षत्रियइतिसंस्म
रणाद्बहुलबली भवति धर्म्माढ्यः ॥ विराडभिख्याभजनात्
पश्यति परभैरवं सर्वम् ॥ ८ ॥ श्मशानवासी पठनात्तत्रस्थो
रक्षकस्तत्र ॥ मांसाशीति च पठनाद्बलवानारोग्यसंयुक्तः ॥
खर्परभोजीभजनाद्भक्तोवैराग्यवान् भवति खरान्तकाख्यापा-
ठात् दुस्पर्शंभैरवोहरति ॥ १० ॥ रक्तप इति शुभपाठाद्भवति
जनोभावभाकुच धीराणाम् ॥ पानप इतीरणाद्वैचित्तैकाग्र्यं
सुखंलभते ॥ ११ ॥ उद्गीर्णात्सिद्ध इति सिद्धावस्थां नरो
याति ॥ सिद्धिदइतिसंस्मरणात्कामानां सिद्धयः सर्वाः ॥
सिद्धिसुसेवितनाम्नः पाठादणिमादिकास्तस्य ॥ कंकालःइति
पठनात्सर्वतपस्या फलंभुङ्क्ते ॥ १२ ॥ भजति सुभक्तोऽभि-
ख्यांश्रीबटुकस्य कालशमन इति ॥ मृत्योर्मृत्युर्भवति हि
भैरवदेवस्य सुप्रीत्या ॥ १४ ॥ कलाकाष्ठातनुरिति पाठात्का-

लस्वरूपज्ञः ॥ कविरिति वदतां ज्ञानं कविताशक्तिःसमुद्भव-
ति ॥ १५ ॥ त्रिनेत्र इति संपठनात् ज्ञानमयं दृश्यते दृश्यम्
बहुनेत्राऽभिख्यातोभवति करामलकवद्विश्वम् ॥ १६ ॥
पिङ्गललोचननाम्नः शत्रूणां नाशकोभवति ॥ शूलपाणि
रितिपाठाच्छूलकरोभवति शत्रूणाम् ॥ १७ ॥ बटुकस्यखड्ग
पाणिः पठनान्नाम्नोहि वैरिणां भवति ॥ नाशकरोहि सुभक्तः
कालानलइव समस्तजन्तूनाम् ॥ १८ ॥ कंकालीति च पठ-
नाद्भयप्रदोवैरिवर्गस्य ॥ धूम्रविलोचननाम्ना दृष्टिहरोहि वै-
रिणां भवति ॥ १९ ॥ यद्वास्योच्चारणतः पश्यतिनान्यज्जगद्भ
क्तः ॥ श्रीमद्भैरवरूपात्दृश्यंसर्वंहि भैरवोभाति ॥ २० ॥
वदत्यभीरोर्नामहि नरोभवत्येव भयहीनः ॥ मायां वशेहि
कुरुषेत्वंभजहेभक्तभैरवीनाथम् ॥ २१ ॥ भूतप इति संभ-
जनाद्भूतानां हि रक्षकोभवति ॥ योगैश्वर्यं वान्छसि भज हे
भक्त योगिनीपतिमीशम् ॥ २२ ॥ धनदाभिख्यापाठाद्धनदध-
नीशोभवत्येव ॥ धनहारीतिचपठनाद्धनहारी भवति शत्रुवर्ग
स्य ॥ २३ ॥ धनवानिति संपठनान्महाधनो भवति लोकेशः ॥
पठतां प्रतिभानुमांश्च सूर्य्य इवापरस्तेजस्वी ॥ २४ ॥ नाग
हार इति पठतां नागेभ्योनैव भवति भयम् ॥ नागपाश इति
पठतां पराङ्मुखाः शत्रवस्तेषाम् ॥ २५ ॥ व्योमकेश इति
भजतां महत्पदोलाघवंयाति ॥ कपालभृद्वैभजतां कापालिक
तत्वमाप्नोति ॥ २६ ॥ कालाभिख्यां भजतां सर्वेकालाःसुखा
वहास्तेषाम् ॥ कपालमाली भजतामिति तत्वार्तिः प्रजायते
न्दृणाम् ॥ २७ ॥ कमनीयस्य स्मरणात् प्रियःसदाभवति

नवैषाम् ॥ कलानिधेःसंपठनात्कलानिधिर्मानवोभवति २८ ॥
त्रैलोचनाभिख्यातोभवति जनः सर्वसंदर्शी ॥ ज्वलन्नेत्र इति
जनाद्दाहकरोभवति शत्रूणाम् ।२९। स्मरंस्त्रिशिखीत्याभिख्यां
सुखं समाप्नोति मानवोभक्त्या ॥ त्रिलोकपाभिख्यातोभैरव
तिभाजनोभवति ॥ ३० ॥ त्रिनेत्रतनयाख्यातो गौरीशः
प्रीतिमान् भवति ॥ डिम्भाभिख्याभजनात्पुत्राद्यानां हि सुखं
भवति ॥ ३१ ॥ शान्ताभिख्याभजनात्सर्वसुखं जायते न्ट-
णाम् ॥ शान्तजनप्रियपाठाच्छान्तिं यान्ति ग्रहादिकाःक्रूराः ॥
३२वटुकाख्यासंपाठाद्राजकुमारप्रियोभवति ॥ अनयाख्ययैव
मनुजोवाञ्छितमर्थं समाप्नोति ॥ ३३ ॥ बहुवेषाभिख्यातो-
नानाजनप्रीतिमान् भवति ॥ ज्ञानी भवति च भैरवकृपयार्था
नीप्सितांल्लभते ॥ ३४ ॥ खट्वाङ्गवरधारक इति संपठनाज्जन-
भयसर्वेभ्यः ॥ सततं रक्षा भवति हि वरदोदेवोऽस्य भैरवो
भवति ॥ ३५ ॥ भूताध्यक्षाभिख्याभजनाद्वै भवति भूतपो
मनुजः ॥ पशुपतिरिति संकथनान्नरःपशूनां पतिर्भवति ३६॥
भिक्षुक इत्याख्येयं ज्ञानविरागदायिनी भवति ॥ परिचारक
इति पठनात्सुकरं कार्य्यंहि सर्वदा तस्य ॥ ३७ ॥ धूर्त्ताभि-
ख्यापाठः कुरुते मनुजं हि मायाज्ञम् ॥ दिगम्बरोच्चारणातो
मायावर्णेन हीनात्मा ॥ ३८ ॥ शूराभिख्यापठनाद्विश्वजयी
शत्रुजयी भवति ॥ हरिणाभिख्याभणनाच्छुद्धोवै भवतिमान-
वः सद्यः ॥ ३९ ॥ पाण्डुविलोचनपाठाच्छुद्धादृष्टिर्भवेन्नृणाम् ॥
प्रशान्तपाठाद्भवति हि प्रशान्तशत्रुर्नरोभक्तः ॥ ४० ॥ शान्ति
द इति संपाठात्परकृतकृत्याहि विनाशितास्तेन ॥ शुद्धाभि-

ख्याभजनाच्छुद्धस्वान्तोहि जनोभवति ॥ ४१ ॥ शङ्करप्रिय बन्धुरिति भजतोह्युपकारकारकोदेवः ॥ सुखदोभैरवनाथो भवति सदानन्ददायकस्तस्य ॥ ४२ ॥ अष्टमूर्त्तिरिति पाठात्प्रसन्नताचाष्टमूर्त्तीनाम् ॥ निधीश इति संकथनाद्भवति धनाढ्योहि पुरुषोसौ ॥ ४३ ॥ ज्ञानचक्षुरिति पाठाद्भवति ह्यात्मात्मदर्शकः पुरुषः ॥ तपोमयाभिख्यातः पूतात्मा भवति मानवः सद्यः ॥ ४४ ॥ अष्टाधाराभिख्या भजनादाधारवान् हि भवति ॥ षडाधार इति भजनाद्भवतिजनश्चाश्रयीलोके ॥ ४५ ॥ सर्पयुक्त इति भजनात्सर्पा न हि भयप्रदास्तस्य ॥ शिखीसखाभिख्यातो मूर्द्धन्योभवति लोकानाम् ॥ ४६ ॥ हुतभुक्तेजा भवति हि भक्तोदेवस्य तापदः शत्रोः भूधरइति संपाठात् क्षमाकरोहि निश्चलोभवति ॥ ४७ ॥ पर्वतभयं न ते स्यात्पठमानवभूधराधीशम् ॥ भूपतिरितिसंपाठात् कृपया देवस्य भूपतिर्भवति ॥ ४८ ॥ प्रियंवदस्त्वं भवसि हि पठ हे भक्त भूधरात्मेति कङ्कालधारिपाठाद्भयंकरोभवति शत्रुवर्गस्य ॥ ४९ ॥ मुण्डीति च संपठनात्संग्रामे हि शत्रुमारको भवति ॥ सर्पोपवीतमानीति पठनात्कालहारकोभवति ५० ॥ जृम्भण इति संपठनान्निद्रातन्द्रायुता ह्यरयः ॥ मोहन इति संपठनान्मोहकरोभवति लोकानाम् ॥ ५१ ॥ स्तम्भीति च संभजनात् स्तम्भकरोभवति शत्रूणाम् ॥ मारण इति संपठनाद्भवति कृतान्तोहि शत्रूणाम् ॥ ५२ ॥ क्षोभण इति संपठनात् क्षोभयिता भवति वैरिवर्गाणाम् ॥ शुद्धपूर्वनीलाञ्जनप्रख्यापाठान्नरोभवति ॥ ५३ ॥ स्फटिक इवान्तःशुद्धोव्यव

रकरोहि वहिर्भवति ॥ दैत्यहेति संजपनाद्दुष्टघ्नोभवति
ानवोभक्तः ॥ ५४ ॥ मुण्डविभूषितपाठी तेजस्वी चैवयश-
ीसः ॥ वालिभुक्नाम्नापाठाद्दैहिकभोगान्समाभुंक्ते ॥
५ ॥ वलिभूङ्नाथाख्यातो भवतिनरोराजराजेशः ॥ बा
ाभिख्याभजनात्समदृष्टिर्हिमानवो भवति ॥ ५६ ॥ प्रीत-
नाः संक्रीडितः सर्वेषां प्रियतमोन्टणाम् ॥ बालपराक्रम
ठान्महाबलोभवति चौजस्वी ॥ ५७ ॥ आपद्विलयं गमय-
सर्वापत्तारणाभिख्यः ॥ दुर्गाभिख्याभजनाद्दुष्टोऽपिविमुच्य
जन्तुः ॥ ५८ ॥ दुर्गतिकोऽपि हि सुगतिर्दुर्गमकार्यं हि
गमतरं भवति ॥ भजतांभक्तजनानां मुक्तिकरोभैरवस्ते-
म् ॥ ५९ ॥ दुष्टभूतविनिषेवितनाम्नाः पाठाद्भवन्ति भक्ता
ाम् ॥ दुष्टा भूता वशगा भैरवनाथप्रसादतः सद्यः ॥ ६० ॥
ामीत्यस्य च पाठाद्बह्वीस्तरुणीर्भवे भुङ्क्ते ॥ सर्वानन्दसु
गों भवभयभङ्गकारकोमृदङ्गी ॥ ६१ ॥ भवति कलानिधि
ठाद्भक्तोनानाकलाभिज्ञः॥ सर्वसमर्थोज्ञानी परमैश्वर्यसंयु-
ाधर्मी ॥ ६२ ॥ कान्तकामिनीवशकृद्भजनात्कान्तकामिनी
शगा ॥ भवति भजनकरस्य हि अनुकम्पातोहि भैरवस्य ॥
३ ॥ वशीत्यभिख्याभजनात्सर्वे वशगा हि मानवान्टणाम्
त्वान्तेन्द्रियवर्गो वश्योवशिनोहि महात्म्यतोभवति ॥ ६४॥
ार्वासिद्धिसंप्रदइति संजपनात्सिद्धयःसर्वाः ॥ भैरवनाथकृपा
ोभवति सुभक्तस्य विचारणातेन ॥ ६५ ॥ वैद्याभिख्याभज
ाद्रोगास्तापादिका विनश्यन्ति ॥ संसृतिरोगाक्रान्तोविज्ञा
ा हि भेषजं समाप्नोति ॥ ६६ ॥ प्रभुरित्याख्यापठनात्सर्व-

समर्थोनरोभवति ॥ विष्णवाख्यासंपठनाद्दयाकरः पालको ज्ञानी ६७ ॥ अष्टोत्तरशतनाम्नां महात्म्यं हि वटुकभैरवस्य ॥ उक्तं तत्प्रेरणया पठतां नृणां भवेत्सिद्धिः ॥ ६८ ॥ यद्यन्नाम सुभजनाद्याया सिद्धिरुदारिता ॥ सासास्माच्छतपूर्वाष्ठनाम-पाठाद्भवेद्ध्रुवम् ॥ ६९ ॥ एकनात्मनश्चपाठाद्वै सिद्धिरेकापि संभवेत् ॥ भक्तस्यात्यन्तिकस्येह कृपया भैरवस्यहि ७० ॥ भैरव भैरव भैरव भजतां न्हृणां च सिद्धयःसर्वाः ॥ हस्त-स्थिता भवन्ति हि किमुवक्तव्यं समग्रसंपठनात् ॥ ७१ ॥ विष्णो विष्णो विष्णो संवदतां सर्वगोदेवः ॥ रक्षति जनं स्वकीयं कार्ये सर्वत्र सहायकोभवति ॥ ७२ ॥ वटुकनाथ माहात्म्यं नामामृतसंयुतं च जिह्वायाम् ॥ विधृतं येन हि भाग्यादमरःसनरोऽजरोभवति ॥ ७३ ॥ इतिश्री परभैरव-प्रेरणया श्रीमदानन्दानन्दनाथपूज्यपादशिष्यश्रीप्रतिभानन्द नाथविरचितमापदुद्धारकवटुकभैरवाष्टोत्तरशतनामामृतमाहा-त्म्यं तथाचैकनाममाहात्म्यम् समाप्तम् ॥

इतिश्री स्तोत्ररत्नावली समाप्ता ॥

---

श्रीमद्वाग्वैभवविधायिनी विजयतेतराम् ॥ ॐनमः परम-कारुणिके। परब्रह्मरूपिणिपरात्मशक्तिस्वरूपिणि। भगवतिभा समानस्वरूपे। लीलागृहीतवपुषिललितेलालयन्तिभक्तान् त्रा-सयन्त्यरीन्। पोषयन्तिपदवज्रपंजरशरणगतान्। आधिव्या-धिजन्ममृत्युभयशोकाद्यनेकक्लेशापहारिणि। तारिणि भवसिंधो श्चतुर्भुजे। सुमनः पंचवाणपुंड्रेक्षुचापस्वर्णसृणिपाशधरे। परे वरे वरदे। वाग्विभूतिविधायिनि। अंतरज्ञानध्वान्तध्वान्सि-नि द्वादशादित्यप्रकाश इव प्रकाशकारिणि ॥ प्रभाकरादिप्र-काशिनि। स्वयंप्रभे नित्ये नित्योदिते नित्योदितानंददायिनि निखिलजनमनोरंजिनि निर्गुणे सगुणे। सृष्टिस्थित्यन्तकारिणि स्वजनमनोहारिणि। स्वाज्ञासकललोकवशविधायिनिप्रणत-पालिके बालिके धृतपुस्तकाक्षमालिके। तरुणारुणरूपिणि॥ आरक्तवसनाभरणमाल्यानुलेपिनि। सुप्रसन्न चन्द्रवदने। करुणाकलितकमलपत्रायताक्षि। कामाक्षि मध्यधमे ॥ यद्यपि त्वदेकचरणसरोजशरणे ॥ करुणाभरदृगंतपातान्। कुरु २ ॥ नमस्त्वच्चरणकमलयोरस्तु ३। ॐमालामंत्रमिदं देव्या ॥ ध्यानं कृत्वा सदा पठेत् निष्कामस्तत्पदं यायात् सका-मोऽभीष्टमाप्नुयात् ॥ इतिश्री आनंदानंदनाथ पूज्यपाद शिष्य श्री प्रतिभानन्दविरिचितं मालामन्त्रं समाप्तम् ॥

श्रीपरमपावनगुर्जरदेशस्थाया दर्शनाभिलाषापूर्णकारिकृ-पामहात्म्यश्लोकटीकाच ॥

अम्बादर्शनलालसाभरमहोयस्याः प्रसादादहम्।
संपूर्णां विदधे ह्यतश्चसदृशः कोनेन भूयान्नृणाम् ॥

एतादृक्फलसिद्धये न हि यथा मोक्षस्यभक्तिं विना ।
हेतुर्भक्तिविलब्धयेऽत्र जगति स्याद्भक्तसंगं विना ॥ १ ॥

अंबेतिअम्बादर्शनलालसाभरंतस्याःप्रसादात् दर्शनायोग्योऽपि अहो अहं साफल्यं विदधे। अमोघंकुर्वे अतोऽस्माद्धेतोःअनेन प्रसादेन सदृशः अम्बादर्शनाभिलाषाभरपरिपूर्णे अन्यःको हेतुः किंकारणं किंसाधनमिति यावत् ॥ यज्ञयागादिः कोपि नास्ति अम्बादर्शनौत्सुक्यसफलीकरणे अम्बायाःकृपैवकारण मितिभावः यज्ञयागादिसाधनलाघवेन दर्शनफलगौरवेण चतस्या दर्शनस्य दुर्लभत्वात् ॥ मादृशानाम् अधमानाम् अम्बादर्शनं तत्कृपामंतराक्वेति भावः ॥ यथा मोक्षस्य भक्तिं विना साधनांतरं सम्यक् हीति निश्चयेन हेतुर्नस्यात् यथा विशेषेण भक्तिलब्धये भक्तसंगं विना हेतुरन्योत्रजगति अस्मिँल्लोके कर्मादिसाधनान्तरं न भवेत् ॥ भक्तिविलब्धये भक्तसंग एव कारणं । तथांबादर्शनलालसाभरसफलीकरणे मादृशानां नीचतराणां । अम्बाकारुण्यवारिधेः । प्रसाद एव कारणं ज्ञातव्यम् । भोजनारेमानसवेति भावः ॥

अयं समुदयी सदा वदनचन्द्र ईड्येशिवे ।
नितान्तमुदयंकरः सकललोकनाथः प्रभुः ॥
गुणाकरविभाकरोनिखिलदोषहारी नृणा-
मनादिनिधनोभवत्वघवितापशांत्यै मम ॥ २ ॥

टीका—हेशिवे हे ईड्ये अयं तव वदनचन्द्रः सदा समुदयी नितान्त मुदयंकरः । सकललोकनाथः प्रभुः । गुणाकरविभा

करः । नृणां दोषहारी अनादिनिधनः ! मम अघवितापसांत्यै भवतु । इत्यन्वयः । कविर्भगवत्याः श्रीमुखचन्द्रादति तुच्छं लौकिकचन्द्रंपरिहृत्य मुखचन्द्रैश्वर्यम् अत्यधिकं मत्वा स्तौति हे ईड्ये सर्वदेवेभ्यः अनेकहेतुतस्त्वमेव वरीयसी त्वत्तोधिकाऽन्या देवता नास्ति अतः सर्वेषां योगुणगुरुर्भवेत् स एव सर्वेषां स्तोतुंयोग्यो भवेत् अत उक्तं हे ईड्ये सर्वेषां देवानां मध्ये सर्वेषां स्तोतुं योग्या । त्वमेवेति भावः ।हेशिवे कल्याणरूपे कल्याणदायिनि परब्रह्मरूपे योलोकचन्द्रःसतुदिने दीनतरोभवति । ह्रासवृद्धी तस्य भवतः अयं त्वद्वदनचन्द्रः सदा समुदयी ह्रासवृद्धिशून्यश्चहर्निशमेकरसरूपः सौन्दर्या-दिगुणसंपन्नः सदोदयी सन्नेव तिष्ठति । पुनर्नृणामपि निता न्तंनित्यमुदयंकरः ज्ञानवृद्धिकरोमङ्गलकरऐश्वर्यधनादिविभू-तिरूपमुदयंकरश्च भवति स तु द्विजराजः विप्रराजःनक्षत्र पतिश्चाऽस्ति न तु सर्वेषां पतिः अयं तु सकललोकनाथः चतुर्दशभुवनाधिपः राजराजेश्वर इतियावत् तच्चन्द्रस्यापि नाथ इतिभावः स तु क्षयरोग्यतोऽसमर्थ अयं त्वनातङ्कः प्रभुश्च भक्तानामभीष्टदाने परमसमर्थः इतिभावः । स तु दोषाकरःरात्रिकरः अयं ज्ञानदिनकरः सदैवास्ति पुनर्दोषाणां गुरु स्त्रीगमनादीनांच आकरःखनिः अयं तु गुणाकरविभाकरः गुणाकरश्चासौविशेषेण भाकरश्चेति कर्मधारयः गुणानां नित्योदयसदोत्सव धर्मशीलपरमसुन्दरनिष्कलंकपापतापा-द्यनिष्टहारकःभक्त हृत्कंजविकाशकलक्ष्मीदायकाद्यनेकगुणाना माकरःखनीभूतः सन् विशेषेणभाकरःभायाः सर्वतेजसआकरः

खनिः यद्वा भक्तानां प्रकाशकारी दीप्तिकारी च यद्वा स्वस्य ब्रह्मरूपस्य तेजसःप्रकाशकारी यद्वा विभाकरः नाम दीप्तीनां सूर्याग्निविद्युच्चन्द्राणां सर्वतेजसां खनिःप्रकाशकानामपिप्रकाशकःविपदसामर्थ्याल्लब्धोयमर्थः कामकलोर्द्ध्वबिन्दुपरब्रह्मबिम्ब रूपइत्यर्थतस्यमुखत्वेनप्रतिपादनात्अतएवकामक्रोधादयोदोषास्तेषांहारीदूरकर्त्तानृणांस्वभक्तानामित्यर्थःयद्वासतुस्वयमेवदोषाकरः दोषानामाकरः तदा अन्येषां दोषहरणं क्व भवति दोष करणंतु तस्य स्यादेवेत्यर्थः स तु अग्रे समुद्रमंथनात्प्राङ्नासीत् । प्रलये च लयं गमिष्यत्येव अतः साद्यन्त अयं त्वद्वदनचन्द्रस्तु अनादिनिधन आद्यन्तरहितः सद्रूपःदेशकालाद्यनवछिन्नः सच्चिदानन्दरूपः यः सद्रूपः सचिद्रूपाभवति यः सच्चिद्रूपः स आनंदरूपोभवितुमर्हति स्वतःस्वरूपं प्रकाशयन् विश्वजातं प्रकाशयति अर्थात्भगवत्याः मुखचन्द्र एव सच्चिदानन्दः स वदनचन्द्रः मम अघवितापशांत्यै भवतु अघाज्जातोविशेषतापः कायिकवाचकमानसरूपः तस्य शांत्यै नाशाय भवतु स चन्द्रस्तु बहिस्तापनाशकोभवति परंतु त्रिविधतापनाशकः पापनाशकश्च न भवति अयं त्वद्वदनचंद्रः पापतापद्वयनाशकोभवति अतोमया प्रार्थ्यते याञ्चाहि धनिनोदानसमर्थस्य धर्मशीलस्याग्रे क्रियमाणाऽमोघा भवति परंतु कृपणस्यनिर्धनस्याधर्मात्मन इत्यर्थ अयं तु त्वद्वदनचन्द्रःपापतापनाशकसामर्थ्यरूपधनवान् दानशौण्डःधर्मधुरंधरः धर्मार्थ एवाविर्भावोऽस्याऽतः सर्वमालोच्य मया याच्यते इतिभावः ॥

रजसारजस्तमस्कोयोना युक्तोहि विवृद्धशुक्लगुणः ॥
मातःपदपङ्कजयोः संस्ते सोभ्येति निर्वाणम् ॥ ३ ॥

हे मातः तेपदपङ्कजयोरजसायुक्तोरजस्तमस्कोयो नासना हीति निश्चये विवृद्धशुक्लगुणः सन् निर्वाणमभ्येतीत्यन्वयः यः ना नरस्त्वद्भक्तस्ते पदपंकजयोरजसा परागेण परिप्लुतः नमस्कार करणात्ते चरणारजोयुक्तमस्तकः अरजस्तमस्कः प्रथमतोभू-त्वा विशेषेण वृद्धशुक्लगुणः शुद्धसत्वगुणः सन् अभिसमन्ता-न्निर्वाणाख्यं सुखरूपं पदंस्थानं एतिप्राप्नोति इत्यहोपदपङ्कज परागमाहात्म्य मितिभावः कुतोयोरजसा युक्तः सो रजस्तम स्कःकथं भवति योरजसा युक्तोभवति सोऽधकारयुक्तोपि भवत्येव रजश्छन्नस्यावश्यमन्धकारप्रसंगात् । तदावश्यं दुःखो दर्कस्थानप्रसंगः स्यात् गमनसमये स्वरूपस्यसन्मार्गस्य चाप्रकाशात् स्खलनं पतनं च भवत्येव अयं तु न तथारज-सश्छन्नोपि अरजस्तमस्कःरजोन्धकाररहितःरजोगुणतमोगुण रहितत्वाद्विवृद्धशुक्लगुणः विशेषेण वृद्ध उज्ज्वल एव गुण-उज्ज्वलगुणः शुद्धसत्वगुणः सर्वपापरहितत्वात् शुद्धान्तः करणत्वात् आणवकार्मिकमायिकमलरहितः शुद्धब्रह्मरूपःसन् यद्वाविवृद्धःशुक्लगुणः विवृद्धसत्वगुणोयस्य सः अर्थात् पूर्वं ते पदपङ्कजरजसा युक्त अरजस्तमस्कोरजोगुणतमोगुणरहितो भूत्वा वृद्धसत्वगुणी च भूत्वा पुनस्तेनापि सत्वगुणेन विरहितः सन् निर्गुणः शुद्धचैतन्यरूपी सन् स्वरूपभूतं निर्वाणाख्यं स्वरूपं पदमभिसमंतात् प्राप्नोति इत्यहोचित्रं चरित्रं चरणा-विंदस्येति भावः ॥

॥ अथ भक्तमहिमा ॥

धन्यास्त एव सुखिनस्त्रिपुरे भवत्याः
पादारविन्द युगलं हि समर्चयन्ति ॥
मान्याः सतां समधियो भुवनैकवन्द्याः,
भुमौ भवानि भवतापहरा जयन्ति ॥ १ ॥

हेभवानि हेत्रिपुरे ये भवत्याः पादारबिन्दयुगलं समर्चयन्ति ते एव अर्चनफललाभात् समधियः । अत एव सतां मान्याः । शरणागतभवतापहराः । अतएव भुवनैकवन्द्याः । सन्तः सुखिनो धन्याः । अतएव भूमौ जयन्ति ॥ १ ॥

श्रीदुर्गायैनमः ॥

ॐअज्ञाजना जननि विष्णुहरादिदेवान्,
विश्वस्थिति प्रलय सृष्टिकरान्वदन्ति ॥
स्वस्वाधिकारकरणे च तएव सृष्टा
देवि त्वया कथमिमे प्रभव स्तदा ते ॥ १ ॥

हेजननि हे देवि विश्वस्थिति प्रलयसृष्टिकरान् । विष्णुहरादिदेवान् । आदिशब्देन ॥ द्रुहिणेन्द्रभास्करगणेशादिकान् अज्ञाजना वदन्ति स्वमतं स्थापयन्ति । स्तुतिकर्त्ता । त्वयाएवजनन्या त्रिपुरसुन्दर्या स्वस्वाधिकारकरणे सृष्टा इमे तदा पूर्वोक्तास्ते देवाः कथं प्रभवः । कथं सृष्टिस्थिति प्रलयेषुब्रह्मादिदेवाः । स्वतंत्रकर्त्तारः । अपितु नैवते । सृष्टिस्थितिसंहार कारिणी त्वमेवेत्यर्थः । त्वत्परतंत्रा स्तेऽपि अतोज्ञानिभि-

मुमुक्षुभिः । सुबुद्धिभि र्विषयेप्सुभिश्च । स्वेष्टसिद्ध्यै त्वमेव ध्येयागेया पूज्याज्ञेयाश्रयणीयेति भावः ॥

ॐवाङ्मनोतीतरूपा मे हृदि स्थीयताम् ॥

ॐवाङ्मनोतीतसौंदर्यस्वरूपायै नमः ॐवाङ्म० सौंदर्यस्वरूपं पूजयामि नमः ॐमृदुमंजुलसूक्ष्मसंध्यारुणस्वर्णसूत्रचातुर्यान-र्घ्यवसनवासित स्वर्णाभरणभूषित कज्जलकस्तुरिकादिकला-विंदुविशेषविलसितधैर्यगांभीर्यभक्तत्राणपरायणत्व सदयहृद-यताद्यनंत गुणसंपन्नशृंगारकरुणादिरसालयषडूर्मिरहित सदा षोडशवर्षवयस्काखण्डषड्भगसहित सकलसौंदर्य सुधासारा वास चारुसर्वांगशुभग सकल वाङ्मनोतीतमहिमशालि स-च्चिदानंदरूप भक्तानुग्रहवशधृत शोभनीयसकलस्वरूपायै न-मः ॥ १ ॥ ॐमृदु० भक्तानुगृहवशधृत शोभनीयसकलशरी-रम् ॥ पू० ॥ १ ॥ ॐमाणिक्यमणिस्तोमखचित हेमकिरीट-जुष्ट मुक्तादामालंकृत श्रीफलाकारातिसुन्दरशीर्षायै नमः ॥ २ ॥ ॐमाणिक्य० श्रीफलाकारातिसुन्दरशीर्षं पूजयामि नमः ॥ २ ॥ ॐउद्यद्द्वादशतरणिश्रेणिसिंदूरलेखालसितकल्प-द्रुमकुसुमोडुगणविलसित सघनघनश्याम स्निग्धजंघावलंवि सरलकचकृतवेणिकायै नमः ॥ ३ ॥ ॐउद्यद्द्वादश० जंगाव-लंविसरलकचकृतवेणीं पू० ॥ ३ ॥ ॐकदलीपत्रपृष्ठायै नमः ॥ ४ ॥ ॐकदलिपत्रपृष्ठं पू० ॥ ४ ॥ ॐतमःश्यामस्निग्धक-चकृतकलापायै नमः ॥५॥ ॐतमः० कचकृतकलापद्वयं पूः० ॥५ ॥ ॐउद्यत्तरणिश्रेणिसिंदुरपुरलेखालसितसीमंतायै नमः ॥ ६॥ ॐउद्यत्तरणि० सिंदूरपूरलेखालसितसीमंतं पू० ॥ ६ ॥

मृगनाभिलसद्विंदुशरत्पूर्णेन्दुवक्त्रिकायै नमः ॥ ७ ॥ मृग० शरत्पूर्णेन्दुवक्त्रं पू० ॥ ७ ॥ चंद्रार्धोन्नतविशालभालस्थलायै नमः ॥ ८ ॥ चंद्रा० विशालभालस्थलं पू० ॥ ८ ॥ माणिक्य तिलकालिकविलोचनायै नमः ॥ ९ ॥ माणिक्य० विलोचनं पू० ९॥ कामकार्मुकभ्रूयुगलायै नमः १०॥ कामकार्मुकभ्रूयुगलं पू०॥ १० ॥ कामभस्मकज्जलकलाकलिताद्भुतचमत्कारकारि कामसंजीवनभक्ताज्ञानदारिद्रदलनवंजुलदृगंचलांचितकरुणा भृंगार रसाश्रयचपलेक्षणयुगलायै नमः ॥ ११ ॥ काम० करुणाशृंगार रसाश्रयमंदवी क्षणचपलेक्षण युगलं पू० ११ ॥ नासाग्रमौक्तिकलसितहीरमुक्तामणिगणान्वितनासाभरणाभूषित चंपकपुष्पाभनासिकायै नमः ॥ १२ ॥ नासाग्र० चंपकपुष्पाभनासिकां पू० ॥ १२ ॥ ताटंकमहः प्रतिबिंबितालकालिशोभित मृदुमंजुमाणिक्यादर्शकपोल युगलायैनमः ॥१३॥ताटंक०मृदुमाणिक्यादर्शकपोलयुगलं पू० ॥ १३ ॥ पुरटांचितमुक्ताफल कर्णपूरहेमखचित हीरपुंजचलत्ताटंकोट्टंकितगारुड़पत्राकृति कर्ण युगलायै नमः ॥ १४ ॥ पूरटां० गारुड़पत्राकारकर्णयुगलं पू० ॥ १४ ॥ स्वमाधुर्य पराकृतामृतमाधुर्यसहजातिरिक्ताधरोष्ठपुटायै नमः॥ १५ ॥ स्व० सहजारुणोष्ठाधरपुटं पू० ॥ १५ ॥ प्रफुल्लित पङ्कजमुखायै नमः ॥ १६ ॥ प्रफुल्लितपङ्कजमुखं पू० १६ ॥ स्मितचन्द्रिकामुखचन्द्रायै नमः ॥ १७ ॥ स्मितचंद्रिकामुखचन्द्रं पू० ॥ १७ ॥ इति मुख एवपूजयेत् ॥ दरदलितारविन्दुसुन्दरमुखशुद्धविद्यांकुरसूक्ष्म समकांतिकारिहीरा-

वली शोभाहारिरदनावल्यै नमः ॥ १८ ॥ दर० हीरावली शोभाहारिदंतावलीं पू० ॥ १८ ॥ इति मुख एव पू० ॥ वाणीपरिणतमाणिक्यमूर्त्ति विलसितरसनायै नमः ॥ १९ ॥ वाणीपरिणतमाणिक्यमूर्त्ति विलसितरसनां पू० ॥ १९ ॥ मधुस्नपितमृद्विकश्रेयःसंपादिनी गिरायै नमः ॥ २० ॥ मधु० श्रेयःसम्पादिनीगिरां पू० ॥ २० ॥ मुख एव पू० ॥ कमलमुखकर्पूरवाटिकामोदस्त्रासोत्स्वास मंत्रनिमंत्रितागत सौंदर्यमकरंदपानलुब्धकामेश्वर नेत्रमृंगाल्यलकावलियुगलायै नमः ॥ २१ ॥ कमल० कामेश्वरनेत्रमृंगाल्यलकावलियुगलं पू० ॥ २१ ॥ नानारसचातुर्यमाधुर्यादि गुणगणोपेतपिकपेशलालापायै नमः ॥ २२ ॥ नाना० पिकपेशलालापं पू० ॥ २२ ॥ वक्रेंद्रगोपादर्शदण्डातिसुन्दराचिबुकदेशशोभिन्यै नमः ॥ २३ ॥ वक्रेंद्र० अतिसुन्दराचिबुकदेशं पू० ॥ २३ ॥ त्रिग्रामस्थितिनियमसीमत्रिरेखाविलसित मृणालकंधरायै नमः ॥२४॥ त्रिग्राम० मृणालकंधरां पू० ॥२४॥ कामेशबद्धमांगल्यमणिसूत्रलसछ्रीकंठायै नमः ॥ २५ ॥ का० मणिसूत्रलसछ्रीकंठं पू० ॥२५॥ अनौपम्योन्नतस्कंध युगलायै नमः ॥२६॥ अनौपम्योन्नतस्कंधयुगलं पू० ॥ २६ ॥ अनेकमणिप्रवेकभासमानहेमांगदहेमरत्त केयूरमणिमयवलयादि सर्वस्वर्णाभरणाकलितसंश्रितेप्सितफलदानदक्षकामेश्वराश्लेषित भुजलतिकायै नमः ॥ २७ ॥ अनेक० कामेश्वराश्लेषितभुजलतिकाचतुष्टयं पू० २७ ॥ अनर्घ्यमणिकूर्पायै नमः ॥ २८ ॥ अनर्घ्यमणिकूर्पचतुष्टयं पू० ॥ २८ ॥ नानारत्नांचितसुवर्णशृणिसुव-

र्णपाशेक्षुचापकुसुमशरपंचक विलसितभक्तवरप्रदसकल करा भरणकमनीय शुभसर्वरेखांकितकमल कोमलकरायै नमः २९ ॥ नानारत्नांचित० कमलकोमलकरान् पू० २९ ॥ कलधौ तमण्डितमणिमयहस्तफुल्लसमुल्लसितसहजस्वछातिसुन्दरकर पृष्ठायैनमः३०। कलधौत० सहजस्वछातिसुन्दरकरपृष्टचतुष्टयं पू० ३० रुक्मरत्नांगुष्ठीयकनकमण्यंगुलीयातिरम्यचम्पककलि काकारसरलाविरलांगुल्यैनमः ३१॥ रुक्म०चम्पककलिकाकारः सरलाविरलांगुलीःपू० ॥ ३१ ॥ आरक्तोन्नतेंदुमंडलखंड वामह स्तदशनखायै नमः ॥ ३२ ॥ आरक्तोन्नतेंदुमंडलखंडवामहस्त दशनखान् पू० ॥ ३२॥ भंडासुरसंगराविष्कृतरमारमणावतार दशकसमुन्नतारक्तशीतकलाधरमंडलखंड दक्षकरदशनखायै नमः॥ ३३ ॥ भंडा०शीतकलाधरमंडलखंड दक्षकरदशनखान् पू० ॥ ३३ ॥ महामुक्तामणिहीरहारविभ्राजमानसमुन्नतवि-शालवक्षःस्थलायै नमः ॥ ३४॥ महामुक्ता० समुन्नतविशाल-वक्षःस्थलं पू० ॥ ३४ ॥ सुवर्णसुत्रशोभितमुक्ताजालमंडित सुरंगवसनकंचुकीविलसितसुधासारस्वादुस्तन्यपरिपूर्णकुरुवि-न्दकलशाकारहेरम्बहारिहरहिरण्यगर्भक्षेत्रेशकार्त्तिकेयपरिव्राज कश्रीमच्छंकराचार्य्यपरिपीतकामेश्वरकंजपरिपूजितकामेश्वर महाप्रेममहारत्नमहामणिमहाप्रातिपणस्तनयुगलायै नमः ॥ ३५ ॥सुवर्णसूत्रशोभित कामेश्वरमहाप्रेममहारत्नमहामणि-महाप्रातिपणस्तनयुगलं पू० ॥ ३५ ॥ चलदलसमानाकारा-तिसुन्दरकामेश्वरविलोचनसिद्धि विलद्वारनिम्ननाभिविराज-मानस्वजनमनःशुद्धिसंपादकत्रिवलित्रिवेणीविलासमाननीलं

द्रमणिरेखारोमराजिरमणीयमुक्तादिमणिमण्डित समस्तवि श्वाश्रयोदरायै नमः ॥ ३६ ॥ चलदलसमानाकार० विश्वा श्रयोदरं पू० ॥ ३६ ॥ शृंगाररसापूर्णनिम्ननाभिसरोवररुद्र नेत्राग्निसंदह्यमानानंगकलेवरसंगसमुत्थितोपरिदेशदूरगतधूम सूक्ष्मावलीरोमावल्यै नमः ॥ ३७ ॥ शृंगार० सूक्ष्मरोमावलीं पू० ॥ ३७ ॥ कामेशविहाराद्रिकुचकमनीयेंद्रनीलमणिसर-णिसूक्ष्मरोमावल्यै नमः ॥ ३८ ॥ कामेश० सूक्ष्मरोमाव-लीं पू० ॥ ३८ ॥ कामेश्वरमनःक्रीड़ाकमनीयकमलाकर-नाभिमंडलायै नमः ॥ ३९ ॥ कामेश्वर० कमनीयकमला करनाभिमंडलं पू० ॥ ३९ ॥ कामेश्वरनयनाक्रीड़नाभिस-रोवरपद्मरागरत्नसोपानावलीत्रिवल्यै नमः ॥ ४० ॥ कामे श्वर० नाभिसरोवरपद्मरागरत्नसोपानावालीत्रिवलीं पू० ॥ ४० ॥ स्वजनमनःशुद्धिसंपादकत्रिवेणिकात्रिवल्यै नमः ॥ ४० ॥ स्वजन०त्रिवलीं पू० ॥ ४० ॥ क्वणितकिंकिणी राजमानक्षुद्रघंटिकाविराजमान कटिमेखलाविभ्राजमानमुक्ता फलहारभारविलसिताद्भुतशोभाशालिश्री मत्कुचपर्वतभारा तिखेदायमान सौंदर्य्यातिशयत्रुट्यमान कामेश्वरमुष्टिग्राह्य-मान निजभृत्याशीर्लब्धत्रिवलित्रिबंधनक्षेमायमान भगवत्का-मेशभाग्यविलसितवर्त्तमानमध्यायै नमः ॥ ४१ ॥ क्वणित० कामेशभाग्यविलसितवर्त्तमानकठितटीं पू० ॥ ४१ ॥ वा-ङ्मनोविषयमहिमशाल्यानन्दविद्युदाकृत्याकार दीर्घपार्श्वयुग लायै नमः ॥ ४२ ॥ वाङ्मनो० आनन्दकारिविद्युदाकृत्या कारदीर्घपार्श्वयुगलं पू० ॥ ४२ ॥ कृतविश्वविजयमहीपा-

लमदनाधोमुखस्थापित पराध्र्यवसनाछन्नालंकारालंकृतजग-
ज्जैत्रिकदुंदुभिनितम्बबिम्बयुगलायै नमः ॥ ४१ ॥ कृतवि-
श्वविजय० जगज्जैत्रिकदुंदुभिनितम्बबिम्बयुगलं पू० ॥४२॥
गीर्वाणराजगजेंद्रशुंडादंडोरुयुगलायै नमः ॥ ४३ ॥ गीर्वा-
णराजगजेंद्रशुंडादंडोरुयुगलं पू० ॥ ४३ ॥ माणिक्यमुकुटा
कारजानुयुग्मायै नमः ॥ ४४ ॥ माणिक्यमुकुटाकारजानु
युग्मं पू० ॥ ४४ ॥ अनंगवीरतूणीरजंघायुगलायै नमः ॥
४५ ॥ अनंगवीरतूणीरजंघायुगलं पू० ॥ ४५ ॥ अनौप-
म्यरमरम्यगूढगुल्फायै नमः ॥ ४६ ॥ अनौपम्यपरमरम्य-
गूढगुल्फौ पू० ॥ ४६ ॥ मणिगणलसत्तरणत्कनकपादवल-
यझणन्मंजीरक्कणितपदपत्रकनदद्रत्नांगुष्ठीय छम्छम्कृतहंस-
कातिरमणीय समाश्रितसुरवृक्षछायाभरसंललितसंसारताप-
हारक श्रीनिवासश्रीकरमुनिमानसपेटिकारत्नश्रुतिमस्तकावतं
सस्वयंभूशंभुश्रीपतिसुरेन्द्रप्रभृत्यशेषलेखकिरीटनिकरनीराजि
तसुकृतिहृदयाम्बुजावासललितलास्यलीलास्पदसकलतीर्था-
लयसकलमंगलावसथ स्वजनमानसहंस सकलसौंदर्यस्थान
निखिलनिगमगीतगुणगणगरिष्ट वरदवरिष्ट शिष्टसंसेव्यनिखि
लतेजोनिलयाखिलवाङ्मनोतीतमहिमहिमशालिप्रकाशविम
र्शसामरस्यनिर्वाण स्वरूपाशरणशरणांबुजचरणयुगलायैनमः
॥ ४७ ॥ मणिगणलसत्० अशरणशरणांबुजचरणयुगलं
पू० ॥ ४७ ॥ रत्नेंद्रसारनिर्मितपदपत्रनामकाभरणालंकृत
कूर्म्मपृष्टोच्चपादपृष्ठायै नमः ॥ ४८ ॥ रत्नेंद्र० कूर्म्म
पृष्टोच्चपादपृष्ठयुगलं पू० ॥ ४८ ॥ कलहंसकलारावहंसकानि

नदकामराजवशीकरणमंत्रवशीकृतकामेश्वरचित्तचिंतामाणिन खड्गशकविलसिताविद्रुमकालिकाकाराविरलशरलांगुल्यै नमः ॥ ४९ ॥ कलहंसकलाराव० विद्रुमसाखाकारानिरंतरसरलांगुलीः पू० ॥ ४९ ॥ निजजनमानसमेचकहरणाहिमकरखंडचरणनखमंडलायै नमः ॥ ५० ॥ निज० नखमंडलं पू० ॥ ५० ॥ सहजारक्तालक्तकांचितोर्द्धरेखावज्रांकुशध्वजसरोरुहाद्यंकितारक्तादर्शारिमाविम्ब प्रातिप्रदकमलदलकोमलचरणयुगलायै नमः ॥ ५१ ॥ सहजा० कमलदलकोमलचरणयुगलं पू० ॥ ५१ ॥ गजेंद्रराजहंसगातिगमनविलासायै नमः ॥ ५१ ॥ गजेंद्रराजहंसगतिगमनाविलासं पू० ॥ ५१ ॥ नूपुरहंसकादिशब्दायमानचरणविन्यासलज्जीकृतकलहंसराजहंसायै नमः ॥ ५१ ॥ लज्जीकृतकलहंसराजहंसनूपुरहंसकादिशब्दायमानचरणगतिविलासं पू० ॥ ५१ ॥ चरणाविंन्दयोरेव पू० ॥ ५१ ॥ कामेश्वरभागधेय कामेश्वरैश्वर्य कामेश्वराहंकृतिकामेश्वरपुरषार्थ कामेश्वरतपःपाक कामेश्वरप्राण कामेश्वरप्रेम कामेश्वरकारुण्य कामेश्वरतेजोनिखिलसौंदर्यगुणालयसकलशरीरायै नमः ॥ ५२ ॥ कामेश्वर० निखिलसौंदर्यगुणालयसकलसरीरम् पू० ॥ ५२ ॥ करुणाशृंगारविलासितचंचलमंजुदृगंचलायै नमः ॥ ५३ ॥ करुणा० चंचलमंजुदृगंचलान्नेत्रयोः पू० ॥ ५३ ॥ भक्तेष्टवरप्रदानदक्षमंजुलामृतमिष्टवचनायै नमः ॥ ५४ ॥ भक्तेष्ट० मंजुलामृतमिष्टवचनानि पू० मुखे पू० ॥ ५४ ॥ पूजामन्त्रादौ सर्वत्रप्रणवज्ञातव्यः आवृत्तेः पूजनान्ते वा प्रागेवाथ समाहितः ॥ विन्दुस्थाने परां देवीमथ

वा हृदिकाल्पिताम् ॥ ५५ ॥ मूर्त्तिं धात्वाद्विरचितां सम्यक्प्राणप्रतिष्ठिताम् ॥ महात्रिपुरसुन्दर्याः पूजयेत्साधकोत्तमः ॥ ५६ ॥ अंगप्रत्यंगमम्बाया ध्यायंध्यायंप्रपूजयेत् ॥ एभिश्चालौकिकीपूजामंत्रैःसाधकसत्तमः ॥ ५७ ॥ करोति पूजनं भक्तो नरोविगतकल्मषः ॥ मनसाचिन्तितं कार्य्यं तत्सर्वं सिध्यति धूरुवम् ॥ ५८ ॥ निष्कामोदर्शनार्थंवै षाण्मासिक त्रिकालकम् ॥यजेदेकाग्रमनसा स्वेष्टसिद्धिमवाप्नुयात् ॥ ५९ ॥ इतिश्रीपराम्बिकांगप्रत्यंगपूजनं संपूर्णम् ॥

---

अथ मानसीपूजाविधिर्लिख्यते ॥

सामरस्यस्वरूपायाः करोम्यावाहनं तव ॥ सर्वंगे क्षम्यतां मातः स्वागच्छ मणिमंदिरे ॥ १ ॥ इत्यावाहनम् ॥ उद्यत्सहस्रविधामसमानधामां मंदस्मितेक्षणयुतां कुचभारशोभाम् ॥ पाशांकुशेक्षवधनुः स्मरबाणहस्तां ध्यायेसदापराशिवांकगतां परांवाम् ॥ २ ॥ इतिध्यानम् ॥ यस्यां प्रतिष्ठितं जातं विश्वमेतच्चराचरम् ॥ तस्यै तुभ्यं ददे रत्नहेमसिंहासनं मुदा ३ ॥ इत्यासनम् ॥ गंगापाद्यजले तुभ्यं गंधपुष्पाक्षतान्वितम् ॥ पाद्यंसमर्पये मातर्गृह्यतां क्षम्यतां मयि ॥ ४ पाद्यम् ॥ अनर्घ्यतां जनायांति यत्कृपालेशलेशतः ॥ अर्घ्यं समर्पयेतस्यै ह्याष्टांगं विधिपूर्वकम् ॥ ५ ॥ इत्यर्घ्यम् ॥ स्वतः शुद्धस्वरूपायै परशुद्धिविधायिनि ॥ लवंगादिजलेनाम्बशिवे आचमनं ददे ॥ ६ ॥ इत्याचमनम् ॥ स्वमाधुर्यरसामिष्टकृतामृतरसे शिवे

मधुपर्कं प्रयच्छामि गृहाण त्वं क्षमस्वमे ॥ ७ ॥ इतिमधुपर्कं ॥ ॐ पुनराचमनं शुद्धतरायै सम्यगर्पये ॥ स्वनामशुद्धसंप्राप्तिकरे मातर्गृहाणते ॥ ८ ॥ इतिपुनराचमनम् ॥ ॐ मलयाचलसंजातनिर्मिते सुंदराकृति ॥ देवार्चिताभ्यां पादाभ्यां पदूके गृह्यतांशिवे ॥ ९ ॥ इतिपादुकापर्णम् ॥ ॐ यागस्थानात्तुशुभगात् स्नानालयमनुत्तमं प्रवेशयामित्वां मातःस्नानायपरमोत्तमे ॥ १० ॥ इतिस्नानालयप्रवेशनम् ॥ तत्रासनं प्रयच्छामि हैमं पीठंमनोहरम् ॥ स्थित्वास्मिन्नाम्बिके सर्वाधाररूपेकृतार्थय ॥ ११ इत्यासनम् ॥ पादतीर्थे तीर्थजलं सुगन्धाक्षतपुष्पकम् हिरण्यपात्रसंभूतं पाद्यन्तेंघ्र्योःसमर्पये ॥ १२ ॥ इतिपाद्यम् ॥ अर्घ्यमष्टांगसंयुक्तं सच्छास्त्रविधिनार्पितम् ॥ गृहाण कृपयेशानि रत्नपात्रस्थमुज्वलं ॥ १३ ॥ इत्यर्घ्यम् ॥ एलालवंगसंमिश्रं सुधार्णेनामृतीकृतं ॥ जलमाचम्पतांस्वर्ण पात्रस्थंशुद्धरूपिणि ॥ १४ ॥ दधिसर्पिमधुन्यंव भिश्रितानिमनोहरे ॥ मधुमत्यर्पितानीशे स्वात्मीकृत्यकृतार्थय ॥ १५ ॥ इतिमधुपर्कम् ॥ पुनराचमनीयंते शुद्धनैवसुवारिणा ॥ ददाम्यम्ब तव प्रीत्यै गृहाणत्वंकृपानिधे ॥ १६ ॥ इतिपुनराचमनम् ॥ सुगन्धितैलामलकैः केशांस्तेशोधयाम्यहम् ॥ मलहीनस्वतः श्याम स्निग्धकेशसुगंधिनि ॥ १७ ॥ इतिसुगन्धतैलामलकार्पणम् ॥ सुगन्धिमिश्रितैर्मात रुष्णतीर्थोदकैः शिवैः ॥ सुखस्पर्शैस्तवस्नानं कारयेजगदाम्बिके ॥ १८ ॥ इत्युष्णोदकस्नानम् ॥ सुरभिस्नेहसंयुक्तैः सुगन्धिजलमिश्रितैः ॥ वस्त्रलंचालितै रन्नपिष्टैःरुद्वर्त्तनंकुरु ॥ १९ ॥ इत्युद्वर्त्तनम् ॥ पुष्प-

सारसमाकृष्टैः चांपेयपाटलादिभिः ॥ श्रीमत्केशादिसर्वांगं सुस्नेहैःसंप्रलेपये ॥ २० ॥ इत्यभ्यंगम् ॥ ॐ सुगंधिमिश्रितै-र्मात० ॥ २१ ॥ इत्युष्णो० ॥ ॐ ततस्त्वांवारुणस्नानं कारये जगदम्बिके ॥ जलैःकनककुम्भस्थैः सर्वतः शुद्धिदायिनि २२ ॥ इतिवारुणस्नानम् ॥ ॐ पयोदधिघृतैर्मातः गव्यैर्मधुभिरी-श्वरि ॥ शर्कराभिःस्वर्णकुंभस्थितैस्त्वांस्नापयेशनैः ॥ २३ ॥ इतिपंचामृतस्नानम् ॥ ॐपुनःपंचामृतैरेकीकृतैःशुद्धजलैस्ततः गंधजलैःशुद्धजलैः पुनस्त्वांस्नापयेंबिके ॥ २४ ॥ इतिपंचा-मृतगंधजल शुद्धजलस्नानम् ॥ ॐ नानाविधैः फलरसैर्मिष्टै र्मिष्टाम्लमिश्रकैः ॥ स्नापयामि ततःशुद्धरूपे शुद्धजलैरहम् २५ इतिफलरसशुद्धजलस्नानम् ॥ रुक्मजलैःस्वर्णजलै रत्नान्वित जलैःशिवे ॥ पुष्पजलैःशुद्धजलैः तवस्नानंसुकारये ॥ २६ ॥ इति रुक्मस्वर्णरत्नजलपुष्पजलशुद्धजलस्नानम् ॥ ॐसमस्त तीर्थचरणे मायामलविनाशिनि ॥ सर्वतीर्थोदकैःस्नानम् कार-यामिकृपार्णवे ॥ २७ ॥ इतिसर्वतीर्थोदकस्नानम् ॥ ॐसह-स्रधारयास्नानम् सुवर्णकलशैरलम् ॥ सहस्रैर्जलसंपूर्णैः स्तव स्नानंप्रकल्पये ॥ २८ ॥ इतिसहस्रजलधारासहस्रजलकलश स्नानम् ॥ ॐअंतर्बहिश्शुद्धरूपे सदाशुद्धत्वदायिनि ॥ गंगोद-केनाचमनं तुभ्यंदत्तंप्रगृह्यताम् ॥ २९ ॥ इत्याचमनम् ॥ ॐ सर्वांगप्रोंछनंकुर्वे तवदेविदयानिधे ॥ सुसूक्ष्मेणसुवस्त्रेण केशानांप्रोंछनंतथा ॥ ३० ॥ इत्यङ्गप्रोंछनार्थवस्त्रम् ॥ ॐयथै वाछादितंसर्वं ब्रह्मांडमखिलेश्वरि ॥ तस्यै वस्त्राण्यमोल्यानि सुरंगाणिसमर्पये ॥ ३१ ॥ इतिपरिधानोत्तरीयकंचुकयादि-

वस्त्रार्पणम् ॥ ॐ आचमनंशुद्धजलैः कारयाम्यंबशीतलैः ॥ स्मरणाच्छुद्धिदेशीघ्रं कुरुतैर्थैःकृपानिधे ३२ ॥ इत्याचमनम् ॥ ॐ सर्वमंगलरूपायै मणिसूत्रंसुमंगलम् ॥ श्रीमत्कंठेर्प्ययाम्यम्ब स्वभावरमणीयके ॥ ३३ ॥ इतिमंगलसूत्रसमर्पणम् ॥ ॐ पादुकेरत्नघटिते ॥ स्वर्णचातुर्यशोभिते ॥ अंगीकृत्यपदाब्जाभ्यां कृतार्थंकुरुमांशिवे ॥ ३४ ॥ इतिपादुकार्पणम् ॥ ॐ स्थिताभवस्वर्णपीठे जगदाधाररूपिणि ॥ केशप्रसाधनायेशं सुगंधिद्रव्यमर्पये ॥ ३५ ॥ इत्यासनंश्रीमत्केशेषुसुगंधिद्रव्यसमर्पणम् ॥ ॐ धूपयेऽहंततः केशान् शिवेमलयजेनते ॥ शोधयित्वास्वलंकृत्यकंकत्यास्वर्णजातया ३६ । इतिकेशानांधूपनम् मार्जनं अलंकर्णंच ॥ ॐ अस्मिन्नवसरेमातर्दर्पणंतेर्पयाम्यहम् मुखचन्द्रस्यसौंदर्यं मालोक्याह्लादमावह ॥ ३७ ॥ इति दर्पणार्पणम् ॥ ततोहंस्वर्णसूत्रैश्च कल्पद्रुकुसुमोच्चयैः ॥ केशान्ग्रथ्नामिकामाक्षि प्रीतोभक्त्याखिलेश्वरि ॥ ३८ ॥ इतिकेशग्रंथनम् ॥ पादुकेरत्नखचिते सुवर्णरचितेशुभे ॥ पादयोर्धेहिमातस्त्वं मच्छिरोलंकृतेशिवे ३९ ॥ इतिपादुकासमर्पणम् अलङ्कारगृहेरम्ये स्वरूपालंकृतेशिवे ॥ त्रैलोक्यमंडपेमातर्भाःसमेह्याशुमोदय ॥ ४० ॥ इतिभूषामंडपप्रवेशनम् ॥ सिंहासनं पाद्यमर्घ्यं तथाचमनकंशिवे ॥ मधुपर्कंप्रयच्छामि पुनराचमनं परे ॥ ४१ ॥ इत्यासनपाद्यार्घ्याचमनमधुपर्कपुनराचमनसमर्पणम् ॥ यदलंकारणात्सर्वं जायतेऽलंकृतंजगत् ॥ सर्वाअलंकृतीस्तस्यै तुभ्यंदेविसमर्पये ॥ ४२ ॥ इतिसर्वालङ्कारसमर्पणम् ॥ कज्जलादीनिसौभाग्य द्रव्याणिसकलानिते ॥ योग्या

नितेस्वसौंदर्यस्वरूपेऽहंसमर्पये ॥ ४३ ॥ इतिकज्जलादिसर्वसौ-
भाग्यद्रव्यंसमर्पयामि ॥ यागगेहेसमागच्छ च नेकमणिमंडि
ते ॥ चित्रचातुर्यशोभाढ्ये मातर्दीपावलीयुते ॥ ४४ ॥ इति
यागमंडपप्रवेशनप्रार्थना ॥ पादुकेरत्नखचिते सुवर्णरचितेशुभे
पदयोर्धेहिमातस्त्वं मच्छिरोलंकृतेशिवे ॥ ४५ ॥ इतिपादुका
समर्पणम् ॥ शिवकामेश्वरांकोपवेशनं कल्पयामिते ॥ पाद्य-
माचमनंमिष्टपर्कंचाचमनंददे ४६ ॥ इतिकामेश्वरांकोपवेशन
पाद्याचमनमधुपर्कपुनराचमनसमर्पणम् ॥ स्वर्णपाशांकुशावि
क्षु चापवाणान्करैर्धृते ॥ कामेशांकस्थितेपूजा मंगीकुरुकृपां
कुरु ॥ ४७ ॥ इतिध्यानपूजाप्रार्थना ॥ स्वभावेनसुगंधायै
सुगन्धन्तेशिवेऽर्पये॥चतुर्विधंतवप्रीत्यै गृहाणाम्बक्षमस्वमे ४८
इतिचतुर्विधगंधसमर्पणम् ॥ स्वभावसुन्दराकृत्यै चाक्षतान्य
म्बतेऽर्पये ॥ अलंकारार्थमीशायै कृपयागृह्यतांत्वया ॥ ४९ ॥
इत्यक्षत समर्पणम् ॥ सूक्ष्ममुक्ताफलान्येव । ह्यविद्धानिमनो
हरे । मयानिवेदितानीशे ललाटेतेप्रगृह्यताम् ४९ अविद्धसूक्ष्म
मुक्ताफलाक्षतसमर्पणम् स्वाभाविकांगसुरभेर्नानापुष्पसमुद्भ-
वाःमालास्तबकसंयुक्तास्तुभ्यंमातःसमर्पये ५० ॥ इतिनानापु-
ष्पस्तबक मालासमर्पणम् ॥ स्वघ्राणतर्पणेनैव तर्पितायैसम-
र्पये ॥ धूपंनानासुगंधंते शिवार्थमेसुगृह्यताम् ॥ ५१ ॥ सूर्या
ग्निचन्द्रचपला यत्प्रकाशप्रकाशिताः ॥ भासयंत्यखिलान्
दीपमालास्तस्यैसमर्पये ॥ ५२ ॥ इतिदीपमालासमर्पणम् ॥
आचम्यतांशुद्धरूपेमृतोपस्तरणायते ॥ गंगोदकेनार्पितेन कृप
याकरुणार्णवे ॥ ५३ ॥ इतिमृतोपस्तरणम् ॥ परामृतंसीधुरसं

मंत्रपूतंकलार्चितम् ॥ स्वरूपानन्ददंपूर्णे तेर्पयेसुखरूपिणि ५४
इतिपरामृतसीधुरस समर्पणम् ॥ जलभूमिवियच्चारि भक्ष्य-
मांसंसुसंस्कृतम् ॥ स्वानन्देनसदातुष्टे तुभ्यमम्बसमर्पये
॥ ५५ ॥ इतिसंस्कृतभक्ष्यपललसमर्पणम् ॥ यदन्नपूर्णयावि-
श्वं सन्नदानेनपुष्यते ॥ तस्यै चतुर्विधंचान्नं षड्रसोपेतमर्पये
॥ ५६ ॥ इतिनैवेद्यसमर्पणम् ॥ स्वानन्दस्वांतशीतायै तुष्टि
पुष्टिकरेर्पये ॥ शैशिरंगांगमुकदं पानार्थेतेसुगन्धितम् ॥ ५७॥
इतिमध्येपानीय समर्पणम् ॥ अनेकजन्मसत्कर्म फलरूपपदा
म्बुजे ॥ नानाफलानिपक्कानि सुमिष्टानिसमर्पये ॥ ५८ ॥ इति
फलसमर्पणम्। शिवेसुधापिधानंच गांगवारिमयार्पितम् ॥ तेना
म्वाचम्यतांभक्त्या विश्वशुद्धिविधायिनि ॥५९॥ इत्युत्तरापोस-
नम् ॥ सुसूक्ष्मेणान्नचूर्णेन करोद्वर्त्तनकंतथा ॥ कारयामिशिवे
चन्द्रचूर्णसंमिश्रितेनच ॥ ६० ॥ इतिकरोद्वर्त्तनम् ॥ करप्रक्षा
लनंसाधु कारयामितथामुखम् ॥ प्रक्षालनंदंतशुद्धिं कर्पूरशकलै
र्जलैः ॥ ६१ ॥ इतिकरमुखप्रक्षालनम् ॥ मुखचन्द्रादिमृष्टार्थं
करमृष्टार्थमेवच ॥ सूक्ष्मवस्त्रंतवार्थेहि शिवेसुष्टुसमर्पये ॥ ६२॥
इतिकरमुखमृष्टार्थंसूक्ष्मवस्त्रसमर्पणम् ॥ पाद्यमाचमनीयंते
सौगंधिकजलेनच ॥ करौसुरभिसंयुक्तौ कारयामिसुगंधिनि ॥
६३ ॥ इतिपाद्याचमन करसुरभिसमर्पणम् ॥ विद्रुमाधरसं-
शोभि स्वभावसुरभीकृते ॥ कर्पूरवीटिकांश्रीमन्मुखेतेमातरर्प
ये ॥ ६४ ॥ इतिकर्पूरवीटिकासमर्पणम् ॥ कटाक्षकिंकरी
भूत लक्ष्म्यै कनकदक्षिणाम् ॥ ददाम्यहमित्यज्ञानम् तत्क्षम्य-
स्वशिवेम्बिके ॥ ६५ ॥ इतिकनकदक्षिणासमर्पणम् ॥ त्वद

भिन्नानिवस्तूनि त्वज्जातानितवैवते ॥ मयानिवेदितान्यम्ब त्वद्योग्यानिसुगृह्यताम् ॥ ६६ ॥ इतिसर्वपूजायोग्यसर्ववस्तु समर्पणम् ॥ नीराजयामिदीपैस्त्वां यद्दीप्त्यादीपितंजगत् ॥ तांसर्वसाक्षिणींदृश्यां सुनिरीक्ष्येकृपान्विताम् ॥ ६७ ॥ इति नीराजनम् ॥ मंदारपारिजातादि पुष्पवृष्टिं पदाब्जयोः ॥ कारुण्यामृतवर्षिण्या स्तवकुर्वेसुरार्चिते ॥ ६८ ॥ इतिपुष्प-वृष्टिसमर्पणम् ॥ मंदारपारिजातादि भूरुहारामवासिनी ॥ कुर्वेपादाब्जयोः पुष्पवृष्टिंसच्चंपकादिभिः ॥ ६९ ॥ इतिपुष्प-वृष्टिसमर्पणम् ॥ नानारत्नैःस्वर्णरूप्यपुष्पैः पुष्पाञ्जलिंशिवे ॥ तवपादाब्जयोःकुर्वे भूतिदे भूतिरूपिणि इति नानारत्नस्वर्ण-रूप्य पुष्पाञ्जलिसमर्पणम् ॥ ६९ ॥ ॐ राजोपचारानखिलान् छत्रचामरपूर्वकान् ॥ नृत्यगीतादिकान्सर्वं साम्राज्यैतेसमर्पये ॥७०॥इति राजोपचारसमर्पणम् ॥ ॐ देशकालानवच्छिन्नेतव-कुर्वेप्रदक्षिणाम् ॥ परितोभक्तकृपया धारिताद्भुतविग्रहे ॥७१॥ इतिप्रदक्षिणा ॥ ॐ विरंचिविष्णुरुद्रादि वंदितांघ्रिसरोरुहे ॥ पादारविंदयोस्तेस्तु नतिर्मेष्टांगकैः कृता ॥ ७२ ॥ इतिसा-ष्टांगप्रणतिः ॥ कल्पलताकामदुघा चिंतामणिचरणपङ्कजेयाचे ॥ त्वामहमम्बकृपाब्धि देहित्वच्चरणकंजयोर्भक्तिम् ७२ ॥ इतिप्रार्थना ॥ अद्वयरूपानंते निरवधिकैश्वर्यरूपसौन्दर्य ॥ अज्ञानिनमामिशे कृतापराधंक्षमस्वाम्ब ॥ ७४ ॥ इतिक्षमापनम् ॥ यस्याश्चरणसरोजे नार्पितमीशेहिकर्मबंधाय ॥ भवतिनृणांतस्यास्ते समर्पितंकर्मसर्वंतत् ॥ ७५ ॥ इतिसर्वकर्मसमर्पणम् ॥ यन्न्यूनंवाह्यधिकं कृतमन्यत्रमानसेनाम्ब ॥

तत्सर्वंत्रिपुरेतिच नाम्नापूर्णीकरोमीशे ॥ ७६ ॥ इतिकृत्यपूर्णीकरणम् ॥ अन्तर्यामिणिहृदयात्पूजार्थंचागताकृपया ॥ हृदये स्वीयेधाम्निहि गत्वामेस्थीयतांतत्र ७७ ॥ इतिविसर्जनम् ॥ श्रीदुर्गाम्बायै नमः ॥ सत्यलोकशीर्षायै नमः सत्यलोकशीर्षं पूजयामि नमः ॥ तपोलोकललाटायै नमः ॥ तपोलोकललाटं पू० ॥ जनोलोकमुखायैनमः जनोलोकमुखंपूजयामिनमः ॥ महर्लोककंठायै नमः महर्लोककंठं पू०॥ स्वर्लोकवक्षःस्थलायै नमः स्वर्लोकवक्षःस्थलं पू० ॥ भुवर्लोकहृदयायै नमः ॥ भुवर्लोकहृदयं पू० ॥ भूर्लोकोदरायै नमः भूर्लोकोदरं पू० ॥ अतललोककटितटायैनमः अतलोककटितटं पू०॥ वितललोकशक्थिन्यै नमः ॥ वितललोकशक्थिनी पू० ॥ सुतललोक जानुयुग्मायै नमः सुतललोकजानुयुग्मं पू० ॥ तलातललोक जंघायुगलायै नमः ॥ ॐ तलातललोकजंघायुगलं पू० ॥ ॐ महातललोकगुल्फायै नमः ॥ ॐ महातललोकगुल्फौ पू० ॥ ॐ रसातललोक पादपृष्ठयुगलायै नमः ॥ ॐ रसातल लोकपादपृष्ठयुगलं पू०॥ ॐपाताललोकपादतलद्वयायै नमः॥ पाताललोकपादतलद्वयं पू० ॥ ॐ चतुर्दशभुवनसकलशरीरायै नमः ॥ ॐ चतुर्दशभुवनसकलशरीरं पू० ॥ ॐ सत्यलोकशीर्षादि पाताललोकपर्य्यंत विराड्व्यष्टि समष्टिरूपायै महात्रिपुरसुंदर्यै नमः ॥ ॐसत्यलोकशीर्षादि पाताललोक चरणपर्य्यंत विराड्व्यष्टि समष्टिरूपिणीं श्रीमहात्रिपुरसुंदरीं पू० ॥ इतिवृह्म विश्वज्ञानरूपिणी पूजासमाप्ता ॥

अथ श्रीमत्सप्तशत्यनुसारेणावताराणि कृपापूर्णापांग्याः परदेवतायाः लिख्यंते ॥

पुराकदाचित्कल्पान्ते जगत्युदधितांगते ॥ आस्तीर्य्यशेष पर्य्यंकं योगनिद्रामजोभजत् ॥ १ ॥ तन्नाभिपद्मतोजातं ब्रह्माणंदैत्यपुङ्गवौ ॥ हरेःकर्णमलोत्पन्नौ जग्धितुंतौसमागतौ ॥ २ ॥ मधुकैटभनामानौ विधिर्भीतस्तदाहरेः ॥ शरणंसंस्तु वन्नाले स्थितोगच्छत्पितामहः ॥ ३ ॥ नावबुध्यत्तदाविष्णुर्योगनिद्रावशंगतः ॥ स्तुतोपिबहुधाब्रह्मा नाप्तःकिंचित्फलंतदा ॥ ४ ॥ विष्णुप्रबोधनेहेतुभूतांज्ञात्वेश्वरेश्वरीम् ॥ योगनिद्रां महाकालीं स्तोतुंतामुपचक्रमे ॥ ५ ॥ आत्मनोरक्षणार्थाय दैत्ययोर्नाशनायच ॥ हरेर्जागरणार्थाय संस्तुताब्रह्मणास्वयं ॥ ६ ॥ आविर्बभूवसादेवी ब्रह्मणोदृग्पथिस्थिता ॥ उत्तस्थौच तदाविष्णु र्योगनिद्राविमोचितः ॥ ७ ॥ मधुकैटभाभ्यांहरिः सुचिरंकृतवान्रणम् ॥ नसमृातदादैत्यौ ब्रह्मणाविष्णुनास्तुता ॥ ८ ॥ प्रसन्नासामहामाया स्वीययामाययासुरौ ॥ मोहितौ तौकृतौसद्य श्छद्मनाविष्णुनाहतौ ॥ ९ ॥ बन्धनेमोचनेचैव समर्थैषासनातनी ॥ सर्जनेपालनेशक्ता तथासंहरणेपिच १० एषःस्थलश्चैतदर्थे मानीभूतोविचार्यताम् ॥ सर्वेषांदेवतानांच वरमस्याउपासनम् ॥ ११ ॥ एवंदैत्यविनाशाय ब्रह्मसंरक्षणाय च ॥ नानाप्रयोजनार्थाय जगतांस्थानकलृप्तये ॥ १२ ॥ श्वातीतरदेवैषा भुक्तिदामुक्तिदातथा ॥ ऋग्वेदमूर्त्तिःश्रीका-

ली वाञ्छितार्थप्रदायिनी ॥ १३ ॥ मधुकैटभनाशिन्या स्तमो वत्याजगत्प्रभुवः ॥ त्रिगुणायानिर्गुणाया अस्याभक्तिःसदास्तुमे ॥ १४ ॥ इतिश्री महाकाल्यवतारंचरित्रंच ॥

---

ततोनंतरमेवासीद्रंभपुत्रोमहाबलः ॥ महिषासुरेंद्रोरुद्रांशो वरदृप्तोऽसुराधिपः ॥ १ ॥ विष्णुरुद्रमहेंद्रादीन् देवान्संजित्य संगरे ॥ सर्वांश्चाभजत्सर्वं देवानामधिकारताम् ॥ २ ॥ दुःखा द्दुःखतरंप्राप्ताः विचरंतोमहीतले ॥ मर्त्याइवचते देवाः शरणं परमेश्वरीम् ॥ ३ ॥ जग्मुश्चमनसावाचा कर्मणादितिनंदनाः स्तुतिंचक्रुर्महेशान्या विष्णुमुख्याश्चदेवताः ॥ ४ ॥ निर्जरे भ्यश्चसर्वेभ्यो निःसृत्यैक्यंगतंमहः ॥ महत्संप्रज्वलन्मेरु रिवा वस्थितमद्भुतम् ॥ ५ ॥ तदेवचाभवन्नारी रूपंचसुमनोहरम् ॥ दृष्ट्वंतःसुराःसर्वे परंहर्षमवाप्नुवन् ॥ ६ ॥ उपायनानिश्री देव्यै ददुःसर्वेसुरामुदा ॥ स्तुतिंयथामतिश्चक्रु र्जयजयेतिविभा षिणः ॥ ७ ॥ महिषासुरादिदैत्यानां वधायस्वाधिकारताम् ॥ प्राप्तुंयज्ञस्यभागांश्च यस्यादेव्याःप्रसादतः ॥ ८ ॥ ततोभग वतीदेवी देवानांहर्षवर्द्धनम् ॥ अट्टाट्टहासमुच्चैस्तुभद्रकालीचकार ह ॥ ९ ॥ श्रुत्वाट्टहासंश्रीदेव्या महिषःक्रोधमूर्छितः ॥ वृतो बलेनमहता देवींप्रतिसमागतः ॥ १० ॥ कोटिशःकोटिशो दैत्या युयुधुर्युगपद्रणे ॥ सहस्रभुजधारिण्या महाबलपराक्रमाः ॥ ११ ॥ निजशस्त्रास्त्रसंपातैः सर्वेदैत्यारणेहताः ॥ महादे व्याश्चण्डिकया लीलयामहिषोहतः ॥ १२ ॥ रणेहताश्चते

वापुः स्वर्गं देवारयोपिच ॥ श्रीदेव्यामहिषःप्राप्तो हतःसायु ज्यमीशया ॥ १३ ॥ देवींदिव्यैस्तवैस्तुत्वा पूजयित्वायथा विधिः ॥ वरांश्चपुनरेवापि प्रापुःसर्वाश्चदेवताः ॥ १४ ॥ स्व स्वाधिकारसंप्राप्ता यज्ञभागान्प्रपेदिरे ॥ परांनिवृतिमापन्ना जग्मुःस्वस्वालयंसुराः ॥ १५ ॥ यजुर्वेदपरामूर्त्तिं र्महालक्ष्मी शिवाम्बिका ॥ धर्मसंस्थापनार्थाय चाविरासीद्युगेयुगे ॥ १६ ॥ विचित्राचित्ररूपायाः विचित्रचरितामृतम् ॥ श्रवणेपठ नमाभूत् तृप्तिर्मेत्वत्प्रसादतः ॥ १७ ॥ इतिश्रीमहालक्ष्म्य- वतारंचरित्रंच ॥



ॐ निशुंभशुंभनाशाय सर्वदेवैस्तुसंस्तुता ॥ पार्वतीदेहसंभू- ता सामवेदस्वरूपिणी ॥ १ ॥ महासरस्वतीरूपा जाताहि मवतस्तटे ॥ कौशिकीनामसादेवी विख्याताचंडिकेतिच ॥२॥ कात्यायनीभद्रकाली धूम्राक्षस्यविमर्दिनी ॥ भद्राभगवती दुर्गा शुंभहन्त्रीशिवाम्बिका ॥ ३ ॥ अतीवसुंदरंरूपं त्रैलोक्य- त्राणकारणम् ॥ दधूमनोहरंमाता जगतांशंविधायिनी ॥ ४ ॥ हताःशुंभनिशुंभाद्याः सगरेसर्वदानवाः ॥ अनयैवजगद्धात्र्या क्रीडंत्यास्वेच्छयारणे ॥ ५ ॥ एकानानाकृतिर्देवी सर्वगारणगा शिवा रणेहतानांदैत्यानां दिव्यंपदमदात्परा ॥ ६ ॥ देवाह विर्भुजोजाता यत्प्रसादात्सुरेश्वर त्रैलोक्याधिपतिस्त्वंहि प्राप्तः सर्वेऽमराअपि ॥ ७ ॥ स्वस्वाधिकारतांप्राप्ता लेभिरेपरमां मुदम् ॥ यथामत्यनुसारेण स्तुत्वातांपरदेवताम् ॥ ८ ॥ तयाद त्तान्वरान्प्राप्य ययुःस्वस्वालयंसुराः ॥ देव्याश्चित्रचरित्राणि

व्याहरंतःपरस्परं ॥ ९ ॥ गायंतोविहरंतश्च सुखमापुरनुत्तमम् ॥ तस्यास्तुहंसगातिकौ स्यातांमेमानसेपदौ ॥ १० ॥ इति श्री महासरस्वत्यवतारचरित्रम् ॥

---

मषीवर्णसमप्रख्याकौशिकीकोपसंयुता ॥ तल्ललाटाद्विनिस्क्रान्ता कालीकल्मषनाशिनी ॥ १ ॥ युद्धेशुंभनिशुंभस्य दासयोश्चण्डमुण्डयोः ॥ हत्वातौदानवौघोरौ चंडमुंडौमहापशू ॥ २ ॥ युद्धयज्ञेचंडिकार्थे आगतातत्समीपतः ॥ उत्कासमुचितंवाक्यं देवीतुष्टिविधायसा ॥ ३ ॥ चामुंडेत्यपरंनाम प्रापदेवीप्रसादतः ॥ युद्धेशुंभनिशुंभस्य रक्तबीजस्यचैवहि ॥ ४ ॥ कौशिक्याःपूर्णरूपायाः एषाजातासहायिका ॥ शोणितंरक्तबीजस्य पपौविस्तीर्णवक्त्रिका ॥ ५ ॥ मुखेसमुद्गतांश्चारीन् सर्वांश्चाभक्षयत्तदा ॥ एवंदैत्यःक्षीणरक्तो रणेचंडिकयाहतः रणेशुंभनिशुंभस्य कौशिक्यादेवविस्मये ॥ भक्षितावहवोदैत्या अनयानाशितारणे ॥ ७ ॥ कर्पूरबीजाधिष्ठात्री चामुंडाकालिकाम्बिका ॥ हृदयेशिवशवासीना स्थिताभवतुमेसदा ॥ ८ ॥ इतिश्यामावतारंचरित्रंच ॥ रक्तबीजस्यदासस्ययुद्धेशुंभनिशुंभयोः ॥ शक्तिर्विरिंचेरुद्रस्य स्कंदस्यचहरेस्तथा ॥ १ ॥ वराहस्यनृसिंहस्य देवेंद्रस्यवपुःस्थिता ॥ स्वस्वाधिकारकरणे वलरूपावरप्रदा ॥ २ ॥ शरीरात्तुविनिष्क्रम्य चागताश्चंडिकाम्प्रति ॥ ब्राह्मीमाहेश्वरीचैव कौमारीवैष्णवीतथा ॥ ३ ॥ वाराहीनारसिंहीचमाहेंद्रीचरणाजिरे ॥ रक्तबीजस्यदेव्यश्चदुष्टदैत्यवधायच ॥ ४ ॥ श्रीदेव्याश्चेच्छयासर्वाः समाजग्मुश्चसा-

तरःयस्यदेवस्ययाशक्तिः सावैतद्रूपधारिणी ॥ ५ तच्छस्त्रधारिणीतद्वद्भूषाढ्यातत्पराक्रमा ॥ तच्छीलातद्व्यवहृति स्तद्वद्वाहनवाहिका ॥ ६ ॥ देव्योजयप्रदाःसर्वा युद्धेतीवविशारदाः चंडिकासहिताएताः सुखदावरदाःसदा ॥ ७ ॥ शक्तिदाःशक्तयोमेवै भूयासुरभयप्रदाः ॥ एतादेव्याविभूतीस्ता स्तांचास्यानौमिभूतयः ॥ इत्यष्टमात्रवतारंचरित्रंच ॥ अस्यादेव्या-एताविभूतयः । स्ताविभूतीश्चपुनस्तांनौमिभूतयः शक्तयइत्यस्यविशेषणमहमितिशेषः ॥ देवीदेहात्समुत्पन्ना शिवाशत विराविणी त्वरादैत्यविनाशाय ख्यापयंतीस्वगौरवम् ॥ १ ॥ व्याहरंतीशिवंदूत त्वंगच्छभगवन्निति ॥ निशुंभशुंभनेदीयेब्रूहि वाक्यंमयोदितम् ॥ २ ॥ श्रृणवतांसर्वदैत्यानां तत्रस्थानांममाज्ञया ॥ त्रैलोक्यंप्राप्नुयादिन्द्रः संतुदेवाहविर्भुजः ॥ ३ ॥ प्रयातयूयंपातालं जीवनेच्छास्तिचेद्यदि ॥ यदायुद्धंसमिछंतो भवंतो बलगर्विणः ॥ ४ ॥ समागछततृप्यंतु भवन्मांसेनमच्छिवाः ॥ ययाशिवःकृतोदूतःशिवदूतीतिविश्रुता ॥ ५ ॥ युद्धेशुंभनिशुंभस्यश्रीकौशिक्यामहासुराः ॥ निहताश्चानयादेव्या भक्षिता बहवोरणे ॥ ६ ॥ तस्याश्चरणयोर्दास्यं भूयाज्जन्मनिजन्मनि ॥ १ ॥ इति शिवदूत्यवतारं चरित्रंच ॥

पुनारहस्योक्तानिचरित्राणि लिख्यंते ॥ शुंभनिशुंभवधानंतरम् । देवैःस्तुता श्रीमद्भगवती प्रसन्नाजातातदा कल्याणाय देवैःप्रार्थिताप्रार्थनानुरूप वरानवतरणे हेतुकान्समदात् अतश्च वैवस्वतमन्वंतरेऽष्टाविंशतिमे कलिद्वापुरसंधौनंदगोपस्यकन्या यशोदागर्भसम्भवा नन्दाख्यावतीर्णा ॥ पुनर्जा

तान् शुंभनिशुंभाद्यान्दानवान् नाशयित्वा विंध्याद्रिनिवासि नीचासीत् । पुनरप्यतिरौद्रेणारूपेण भुव्यवतीर्णाविप्रचित्त वंशीयानसुरान्ननाश । कांश्चिदभक्षयच्च । ततोदैत्यरक्तसंलग्न दशनात्स्वेछया श्रीदेव्याः स्वकीयहीररदनावली पद्मरागाली वसमजायत । ततोदेवैःस्वर्गे । भुविचमनुजै रक्तदंतिकेतिना म्ना सास्तुताविख्यातासीत् । इयमपिद्वापुरतीतेऽत्रैव चतुर्थ युगेऽवतीर्णा । रक्तादंताभविष्यंति दाडिमीकुसुमोपमेति सप्त सत्यांस्वयमुक्तम् । ततोरक्तदंताइत्युपलक्षणम् । सर्वांगेषु वस्त्रभू षणायुध गंधपुष्पादिषुरक्तत्वमस्याः । अतएवरक्तचामुंडात्वेन व्यवह्रियते सर्वभयापहारकोऽयमवतारोभक्तानां सप्तसत्या मेकादशाध्याये । वरदानार्थकेषु श्लोकेषु । अहमिति सर्वत्र श्रीमद्देव्युक्तिः परस्परमवताराणामभेदख्यापनार्थमिति बोध्यं भूयइयमेव शतशारद्यामनावृष्टौ अयोनिजा एतत्मन्वंतर एव । चत्वारिंशत्तमेयुगे । शताक्षीशाकंभर्य्यवतीर्णावतारि ष्यति । च तस्मिन्नेवांतरेशक्र । चत्वारिंशत्तमेयुग इत्यादि श्रीमुखेनैव । लक्ष्मीतंत्रोक्तेचोक्तत्वात्मुनीन्शतनेत्रनीरीक्षणेन सुखयंतीनैजाच्छरीराद्दशविधानिशाकानि पत्रमूलकरीराग्रमूल कांडाधिरूढत्वक् पुष्पकवचानि । विरचितवती आवृष्टि जग-त्पुपोषपोषयिष्यतिच एतदुपासका अन्नामृतपानाद्यक्षय सिद्धिंप्राप्नुवन्ति । अक्षय्यमस्नुते । शीघ्रमन्नपानामृतादिक मितिरहस्योक्तेः । तत्रैवचवधिष्यामि दुर्गमाख्यंमहासुर मि-तिसप्तशत्यांतत्रैवेत्युक्तत्वात् । शाकंभर्यवतारएव दुर्गमदैत्यं गतासुंचकार तेन दुर्गेतिप्रकीर्त्तितेति रहस्योक्तेः । जितेन्द्रं

दुर्गमाख्यंमहासुरमबधीत् । ततोदुर्गादेवीति विख्यातासीत् । मुनीनांत्राणायभीमरूपं विधृत्वारक्षांस्यबधीत् ॥ ततोभीमेति वैवस्वतमन्वंतरेपंचाशत्तमे चतुर्थयुगेऽवतीर्णाअवतरीष्यतिच लक्ष्मीतंत्रमेवात्रापिप्रमाणं वैवस्वतमन्वंतरे । एवषष्टितमे चतुर्थयुगे अरुणाख्योमहादैत्योजगत्त्रयंबबाध । तद्भ्रामर्य्यवतीर्य । तन्नाशभ्रमरंहस्ते धृतवतीत्यतो भ्रामरीति नाम्ना विख्याताभूत् चित्रभ्रमरपाणिः । सामहामारीति गीयते इति रहस्यप्रामाण्यात् सप्तसती चरित्रसमाप्तम् ॥

---

सृष्ट्यादौ ब्रह्मणाप्रार्थितो यथाहरस्तल्ललाटोत्पन्नत्वेनपुत्रो जातस्तथा श्रीमत्पराशक्ति पररूपाप्रकृति रपि ब्रह्मप्रार्थिता सती सत्यपि दक्षकन्यासीत् पतिव्रतधर्म्मप्रवर्त्तनायस्त्रीणां । तदेषा जगदानंददायिनी । कामसंजीवनाय तारकासुरवधाद्यनेकामरकार्यसंपादनाय कार्त्तिकादि जननार्थं हिमवतः पत्न्यां मेनायांसंजज्ञे । वसुंधरापिदेवीच्छयाप्रलये तिरोभूता सृष्ट्यादौ । चराचरस्यब्रह्मादि स्तम्बपर्यंतस्य जगतोधारणा याविर्बभूवेति । अन्यान्यपिच । श्री मद्भागतोक्तान्यवताराणि राधालक्ष्मी सरस्वती सावित्रीगंगा मनसास्वधास्वाहा मंगलचंडीषष्ठीदक्षिणाप्रभादीनां । बहूनिसंतितानि । ततएवावगंतव्यानि ॥

ॐ श्रीजगदम्बायै नमः ॥

# श्रीमत्परासक्तिर्विजयतेतराम् ॥

श्रीआनन्दानन्दनाथ श्रीआनन्दाम्बा श्रीपादुकाभ्योनमः श्रीविमर्शानन्दनाथ श्रीविमर्शाम्बा श्रीपादुकाभ्योनमः ॥ श्रीसत्यानन्दनाथ श्रीसत्याम्बा श्रीपादुकाभ्योनमः ॥ श्रीमदस्मत्पितृगुरु श्रीजलंधरनाथजीपादुकाभ्योनमः ॥ श्रीसकलमनोरथातिशयचरणकमलदरशनमनोरथ प्रपूरिणीविजतेतराम् ॥

श्रीमत्पराशक्ति ललितालावण्यलीला लिख्यते

इहखलुश्रीमत्परब्रह्माविना भूतचिच्छक्तिपराशक्तिनाम रूपचरित्राणि महिम्नश्च चतुर्मुख पञ्चमुखसहस्रमुखाद्यैः कोटिवर्षशतैरपिवक्तुं लिखितुंचाशक्यानि तदुक्तं मार्कण्डेयपुराणे ब्रह्मवाक्यं विष्णुः शरीरग्रहणमित्यादि सर्वदेववाक्यम्। यस्याःप्रभावमतुलमित्यादि हेतुः समस्तजगतामित्यादिवेदा अपिनेतिनेति ब्रुवंतिवर्णयंतोमुह्यंति अन्यत्रापि वेद तंत्रपुराणेषु श्रीमद्भगवत्या महिमादिवर्णने सर्वथा सर्वेषाम् समर्थत्वंयुक्तं तत्कथमेकमुखोऽल्पज्ञोजनः स्वल्पायुर्वक्तुं लिखितुंच समर्थोभवेत् तथापि कैश्चिन्महात्माभिर्मदनुग्रहकारिण्यांतर्य्यामिण्याप्रेरितैः पृष्ठोहं मंदोपितयैवप्रेरितः संविदा यावत्प्रेरणाम् यथामतिरुल्लिखामितत्रतावत्प्रथमंकेषांचिन्मते क्रीडार्थमवतारधारणं केचिन्महांतोभक्ता नुग्रहार्थं

मवतारधारणमामनंति केचिद्धर्मपरिपंथिनां दुष्टदैत्यानां ना शायधर्म संस्थापनायचावतारधारणमंगीकुर्वंति तदेतन्नयंशा-स्त्रसंमतंसमीचीनम्।श्रीमद्गुरुगणपतीष्टदेवता विजयतेतराम्॥

श्रीमत्पराशक्तिललितालावण्य लीलालिख्यते ॥

---

अथ कदाचित् समये श्रीमद्योगनिद्रा प्राप्तजीवितव्यैश्व-र्य्यस्य ब्रह्मणोवरदानेन भंडासुरनामा दैत्यप्रवरः कश्चिदजा यतः सचत्रिभुवनं शशासवेदमार्गविरोधीत्रिदशान् बहुशः पीडयामास ततोदेवाः श्रीमद्भगवती प्रीतिद्वाराभंडवधस्वेष्ट प्राप्तये श्रीमत्परासक्तिं ।समाराधयांचक्रुः केचिज्जपाशक्ता बभूवुः केचित्स्तुतिपरा अभूवन् केचित् अर्चनेरताः समजा-यंत । केचिन्नामपारायणेनाराधयामासुः केचित्स्वशरीरा एयुत्कृत्योत्कृत्ययागानलेजुहुवांचक्रुः ततः श्रीमत्परदेवताकृ-पाब्धिः हैयंगवीनहृदया यागानलादनादिनिधना प्रादुरा सीत् साभागधेयंभगवतो भर्गस्यनामधेयंवस्तुजातस्यसाम-र्थ्यं विश्वसर्जनपालन संहरणाख्यं परमेश्वरस्यमहःपरब्रह्मणः सच्चिदानन्दस्य सारसीमासर्वसौंदर्य्यस्य सिद्धांतं सर्वशास्त्रा णा मालयंसर्वगुणानां कदनं सर्वदैत्यानां साफल्यंदेवमनो-रथानां कारणं ब्रह्मादीनांमूर्त्तिः शृङ्गाररसस्यप्रभा सूर्यस्य ज्योत्स्नाचन्द्रस्य स्वादुतासलिलस्य बलं समीरणस्यदाहिका विभावसोः धारणाधरिण्यश्चेतना पुरुषस्यविजयं देवतानां पराभवोदानवानां सिन्धुर्दयायाःपवित्रं पवित्राणां मंगलंमंगला

नांविष्णुर्वैष्णवानां शिवः पाशुपतानां गणेशोगाणपत्यानांरविः सौराणां । परदेवता शाक्तानां सामरस्यंशिवशक्तेः जीवातुर्भक्तानां कर्ममैमांसिकानां प्रकृतिः सांख्यानां कर्त्तानैयायिकानामीश्वरोयोगिनां ब्रह्मवेदांतिनां इत्थंभूतांजगन्मोहनमोहिनीं मूर्त्तिसुमनःपञ्चबाणान् ऐक्षवंधनुश्चदक्षवामाभ्यां अध स्तनाभ्यां जातरूपश्रृणिं पाशंच उपरितनाभ्यां दक्षवामाभ्यां भुजवल्लरीभ्यां दधतीं मंदस्मितमुखाम्बुजां सर्वश्रृंगारशोभाढ्यां कृपापूर्णापांगीं देवाददृशुः दर्शनेनानन्दाब्धौमग्नाः संबभूवुस्ततस्तया परदेवतायाः कृपापाङ्गपातेनानुग्रहिताः सद्य एव वज्रसारसर्वाङ्गाहृष्टाः पुष्टाश्चसमभवन् तांचबहुविधं स्तुत्वा भंडासुरवधं प्रार्थयामासुः इतिततश्चस्वीकृतवत्यांतस्यां सिद्धस्वांतार्थाः संबभूवुः श्रीब्रह्माण्ड पुराणस्थं लालित्यचरित्रं समाप्तम् ॥

---

॥ श्रीदुर्गाम्बायैनमः ॥



मार्कण्डेयपुराणे प्राधानिकनामरहस्ये ॥ पुराप्रलये श्रीमदाद्यामहालक्ष्मी लक्ष्यालक्ष्यस्वरूपाचैकेवसतीसकलंसून्यंतमोभूतं धामात्मकेनालक्ष्येणस्वरूपेण व्याप्यव्यवस्थिता एकाकीनरमते इतिश्रुतेः विश्वंसिसृक्षावती केवलेन तमसा श्रीकालीरूपमपरंदधार ततः शुद्धेनसत्वेन च सरस्वीरूपमन्यदवभारधृत्वाचिरकालीसरस्वतीस्वस्याअनुगुणरूपतोमि-

थुनेसृजेथामित्युवाचाद्या उक्काचस्वयंहिरण्यरुचिरं
स्मास्माकं कमलासनंरजोगुणेन मिथुनमसृजत् ततश्च
ज्ञिता रुद्रत्रय्यात्मकं श्वामाविष्णुंगौर्य्यात्मकं सरस्वतीमि
प्रकटयामास ततःसकलसूःआद्यलक्ष्मीः रुद्रायवरदांगौरीं
देवायश्रियं सर्वसंपद्रूपांब्रह्मणेत्रयीं वाग्धेनुंचाददात्ततो
स्वरयात्रय्यासहसमर्थोब्रह्मांडमजीजनत् लक्ष्म्यासहशक्त
ष्णुःपुपोषरुद्रोगौर्य्यासहेश्वरस्तमंडं बिभेदअंडमध्येप्रधान
कार्यजातं यदासीत्तत्पालयामास लक्ष्म्यासहहरिरेवमे
सर्वेषामादिकारणभूताद्या स्वरूपेण व्यवस्थितास्व
डार्थमनेकरूपा प्रथमतः केवलेन तमोगुणेन कालीरूपा
शुद्धसत्वेनसरस्वतीरूपाजाताततश्चकेवलेनरजसालक्ष्म
चात्मकं स्त्रीपुंसात्मकं मिथुनरूपा समजायत ततः काली
पेणस्थितवतीरुद्रस्वरात्मकं स्त्रीपुंरूपंमिथुनं चाभवत्ततःअ
याज्ञसंकालीरूपोरुद्रः सरस्वतीरूपागौरी तारकासुरवधार्थ
र्त्तिकादिजननार्थं कालकूटपानेनजगतो रक्षणार्थंच वि
जां बाधामभूतदृशां पातेन हरस्यशमनार्थमन्ते विश्वसं
लीलार्थमध्ये अनेकविधविश्वरक्षणार्थं कश्चित्कल्पे ज
र्जनार्थंच दिव्यदंपतिभावमभजत् पतिश्चपत्नीचेति
एवंआद्ययाज्ञस आद्यारूपोब्रह्मा कालीरूपाचत्रयी विश्व
नादि अनेकलीलार्थं जगतोहितायच दिव्यदंपतिभाव
वत एवमाद्यासरस्वतीरूपोविष्णुः आद्यारूपालक्ष्मी
तुर्दशभुवनपालनलीलार्थंपुनाराधाकृष्ण सीतारामाद्यने
पेणानेकदुष्टनिकंदनाय धर्मादिस्थापनाय च भक्तोद्धारव

स्वयंदिव्यदंपती भावमंगीचकार एवंचस्वयंआद्या परब्रह्मप-राशक्तिरूपातिस्टभ्य : कालीलक्ष्मी सरस्वतीभ्योदेवीभ्यस्तित-सृभ्यो ब्रह्मविष्णुरुद्रेभ्योदेवेभ्यो धामत्रयलिंगत्रय पीठत्र-यस्वरत्रय वेदत्रयपदत्रयेभ्यः पुराग्रेप्राक्तनीयकाले व-र्त्तमानातुरीयाख्यात्रिपुरा ब्रह्मविद्याश्रीविद्या महामहिषा-दिदुष्टवधार्थं जगतां रक्षणाय धर्मस्थापनायच देवानांस्वाधि-कारदानपुरःसरं यज्ञभागप्राप्तये चसर्वदेवतेजोरूपं महालक्ष्-म्यादिरूपंधृतवती एवमेवकदाचित्काले भंडासुरवधार्थंनाना-विधक्रीडार्थं श्रीमल्ललितारूपं जगन्मोहन मोहनमाविःस्कु-र्वन्ती सुधासिंधौमणिद्वीपेकल्पवृक्षवनवाटिकावृते ।चिन्ता-मणिमंडपे ब्रह्मविष्णुरुद्रेश्वररूपपादचतुष्टयेशिवप रिस्तरणे क्रीडितवती भक्तापराधशमयंती अलौकिकगुणेन रूपेणालौ-किकेनमनोवाचामविषयेण कृपयागोचरेण च शोभभासर्वगापि भक्तमानसे निवसती प्रकाशविमर्शसामरस्यरूपिणी परदेव-ताविजयतेतराम् ॥ तस्याश्चरण पंकजौ श्रुतिशिरःशेखरीकृ-पागौरवेण निश्चलतयास्थितौ मन्मनसिभवेतांतराम् मनोमे-गोप्यौः कृपयातयोर्वसतुतरां माभून्मेविरहः कदाचित्ताभ्यां-मेऽहर्निशंकायिकंवाचकंमानसंमाभूयात् । इति श्रीमार्कण्डेय-पुराणांतर्गतसप्तसतीरहस्योक्तान्यवताराणि ॥

॥ श्रीपराशक्तयेनम ॥

शक्तिगणेशसूर्यशिवविष्णु एजोपांच देवता हे ते सब वि-रंचिशक्रादित्रयस्त्रिंशत्कोटिदेवता है तिनसबनमै यही अधिक

हे जहां तहां इनको आधिक्यशास्त्रन मै वर्णन कर्यो है परंतु श्रीमद्भगवती जगदंबा पराशक्ति जोपरब्रह्म की सत्ता-स्फुरणा हे वा इन च्यारदेवतानहूतै सर्वदा अधिक वि-राजमान हे इन हेतूनतै के अवलतो यह सब का सिद्धांत हे के जगत का प्रगट होना क्रम करकै जो वरणन कीया है सो तौ केवल उपासनार्थ कीया है नाहितरु एकोऽहंबहु स्यां ये जो श्रुति है तिस मै कहा है में एक बोहत होउः सो ऐसा परमेश्वर पराशक्ति की इच्छा होते ही जगत्उत्पन्न होता भया तो वही परांबा एक अनेक रूप होगई तो जोये शिवविष्णुवादि तृणपर्यंत सब जगत पारमार्थ दृष्टितै तो परासक्ती ही है दूसरा नहीं है परंतु भेद दृष्टि वैष्णवलो क या आधुनिक पूर्व मैमांसिकादिलोकश्री भगवती सै वि-ष्णुवादिनकूं प्रथक मानतै है और अधिक मांनते है सो शास्त्रसंमतन हि है इस वास्ते उनकां कहताहूं के शक्ति सहित ये सब होते है तबतो आप आप का अधिकार करणै कुं-समर्थ होतेहै विगरशक्ति को इदेव वमनुष्य पशुपची आदि कार्य करणेकुं समर्थ नही होते है चैतन्यता का व्यंजक श-क्ति ही है शक्तोक्तिविश्वनिर्माणादिं कर्तुं मितिशक्तिश्क्यते सर्व-त्रव्याप्नोतीति वाशक्तिःसृष्टिस्थिति संहारशक्ति ही करती है ई-श्वरका सगुन और निर्गुनरूप बोध करानेवाली शक्ति ही है और सर्वत्र वह व्यापक है कोई वस्तु उस विगर नहीं है परमेश्वर परशक्ति तो एक ही है नाम मात्र भिन्न हैं ये सब शास्त्रां मैं कह्या है और सब शास्त्र

का ये सिद्धांत है । शक्ति शक्तिमतोरभेदः शक्ति के अरुश क्तिमान के अभेद है अर्थात् एक ही है ईहां वोत श्रुती और पुराण के वचन उपलभ्य हैं महात्मालोक श्रीस-द्दुर्गोपनिषदादि उपनिषदनतै और ऋगादिवेद । और श्रीमद्भगवती भागवत मार्कंडेयपुराण नारदपुराण देवीपुराण महाभारथ सनत्कुमार संहितादिकनतै और रुद्रयामल म-हाकाल संहिता सूतसंहितादि आगमनतै और श्रीपूज्यपाद भगवच्छंकराचार्य के वचन सौंदर्य लहर्यादिकनतै जानऊगे और जो प्रथक मानोंगे तो और सिवाय क्या है परंतु वो जो परमात्मा सच्चिदानंद है सो जगदीश्वर तो उसी करके कहा जायगा और उससहित सदा रहता है कभी वियुक्त नही होता जो कभी वियुक्त होजावे तो कुछ कार्य करण माफिक वो नही रहता है ओष्टफुरकाणे तक भी सामर्थ्य उसकी नही होती हैं सृष्टिस्थिति संहार करणाऔर भक्त का उद्धार करणा ये तो वोहत दूर रहा उस विगर शिवशववत है । उस सहित हि परम मंगल रूप और परम ऐश्वर्यवान् कर्ता पालयिता हर्ता भक्तांका उद्धर्ता भगवान् तो जवही कहा वेगा के शक्ति सहित होगा शक्ति परमेश्वर तैं अभिन्न अ-जव सामर्थ्य है करै और नहीं भी करे और विलक्षण कर देवे अघटन घटना में वड़ी प्रवीणहै तिनहीते ईश्वरसर्व समर्थहै और नित्य श्रीमंगलरूप इसी करके होताहै, जोचाहै सो करता है, परमेश्वरके सर्वकार्य करणेकी सिद्धि रूपिणी यहीहै, इस वास्ते शक्ति का नाम हर सिद्धि है। हरनाम यहां परमेश्वर का दुःख हरण सै है जहांतहां लोकिक में और परमार्थ हू में

भी शक्ति मान की प्रसंसा होती है। शक्ति रहित का नहीं होती रुद्रादि रहित होगा तो निंदित नहीं होगा जो शक्ति रहित होगा वही निंदा का आश्रय होगा शक्ति सर्वत्र व्यापक है ब्रह्मांडपुराण में कया है शक्तेः सर्वत्र संभवः चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका कोई पदार्थ शक्तिरहित नही है। सब पदार्थ का और तिनकी शक्ति का निदान वो पराशक्ति ही है तिसका कभी घाटवाढ़ नही होता और अनित्या कभी नहीं होती चैतन्य रूपसदा एक रस परब्रह्म तैं अभिन्न भई रहती है और सब देवतों का आयुः प्रमाण है। ओरशक्तिः कालकलना तैं सून्य है महाविंदुरूपिणी निराकार सृष्टि समय में गुणां कों अंगीकार कर्त्ति है तिन का अंश शिव विष्णवादि देवता है तिश वास्ते सब तै अधिक सबतै उत्तम सब की ईश्वरी सब का उत्पन्न करने हारी सबतै परे सब की पूज्याभगवती पराशक्ती है ब्रह्मांठपुराण मार्कंडेयपुराणादिकां में बहुत प्रपंच कीया है, महिषासुरादिक दैत्यांने समर में सब देवों को भगादिये है और सब का अधिकार छीन लीया है, तब सब देवता दुखी होकर श्रीपराशक्ति का आराधन कीया तब पराशक्ति ने अपना अंस सब देवतावों में अपने अपने कार्य करणे के लिये जो रखा था उसमें से फेर पराशक्ति ने अपनी इच्छा से सब देवशक्तिकी अंसांका रूप एकत्र करके नारी रूप महिषासुर मर्दिनी दुर्गाका अवतार धारण करके देवताओं की सहायता करीहे अरु महिषासुरादि दैत्यों को उनकी फोजसहित आप अकेली ही ने मार करके देवताओं को अपने अपने

अधिकार पर स्थापनकीये हैं इसी कां मारकंडेयपुराण में महाल-
क्ष्मी भद्रकाली अंबिकादुर्गा भगवती कात्यायिनी चंडिका
इत्यादि नामां से और अन्यत्र उग्रचंडी प्रचंडा करके व-
रणन कीया हैं कोई समय भंडासुरनामा दैत्यमहिषासुरा-
दिकां सें भी अधिक समर्थ हुआ है, उसने सबदेवों
को जीत अधिकार उनका छीन लीया और वेदमार्ग
विछिन्न करदिया तो महिषासुरादिक जो सप्तसती
में लिखा हैं, उन सव दैत्यनकां प्रगट कीये है तव श्रीम-
न्महात्रिपुरसुंदरी ने श्रीदुर्गा को प्रकट करके सब दैत्योंको
दुर्गासे मरवाये है ॥ और भंडासुर नें शंखासुरादि दश दैत्यन कां प्रकट
कीये हैं तो श्रीललिता जूको चतुर्भुजस्वरूप है जिस में
दोय जो दक्ष भुजा का करपल्लव के दस नखां से मत्स्य-
दिक दसही विष्णु का अवतार प्रकट करके दसही असुरां
कों उनसें ही मरवाये है और वोहतसी फोज वडे योद्धार
महारथियों को श्रीललिताजुकी शक्तिओंने और केई शक्तियां
की मालिक जो संपदीश्वरी अश्वारूढानाकुली तिरस्कराणि
कादि नामक जो शक्ति है जिनोंने सब कितनीक दुरधर्ष फोज
कुं मार खपाई है और सव असुर जिनसैं अत्यधिकपन्नह
असुर कूटयोधी थे उनका कामेश्वर्यादि पंचदश शक्तियां
ने वडाभारी युद्ध करके मारे है और प्रथम युद्ध
कुछ हुआ था उस वक्तमें भंडासुर ने प्रथम विघ्नयंत्र शक्ति
सेनापर चलाया तो सब शक्ति चक्र केणें लगगयो के कोणमंत्रि-
णी है । और कोण दंडिनी है हम नहीं मानता है ललिता

कोण है ऐसी व्यवस्थाशक्ति सेनाकी देखकर श्रीसर्वेश्वरी ने श्रीमच्छ्रीललिता जूकां सब वृतांत निवेदन किया तब श्रीकामेश्वर अपणा पुंरूपहे जिसके मुखारबिंद कां आप मंदहास संयुक्त होकर देखातो देखते ही श्रीगणेश्वर देवता प्रकट भयो श्रीजीकां नमस्कार करके युद्ध करणेकुं पधारा तो उसगणेशजू के सरीरतै हजारां और गणपति प्रकटभए और कितनीहि भंडासुर की सब फोज कुं मारहठाई और अपने दांनां सेती विघ्नयंत्र को चूरण करिसिकीमें भिलायदिया अरुविजय करके श्रीललिता भगवती का आय नमस्कारकिया श्रीजी वडे प्रसन्न भए और सर्व देवाग्र पूज्य होणे कौवरदानदिये फिर बतीस कुमार भंडासुरके युद्ध में आये तो उन कुं श्रीबालाजूने अनायास मारडाले फिर श्रीबालाजू का श्रीजीने वडामान कीया और मंत्रिणी ने नीराजना विधि श्रीबालाजी श्रीजीकापरमाप्रियरूप है जिस की करी है फेर भंड के भाई विषंग औविश्रुकभंडके तुल्यवलथे उन कुं संग्राम भूमिमेंमंत्रिणी डंडिनी ने बधाकिये तदनंतर भंडासुर कुं स्वयं श्रीललिता जूने मारो है और उस का सून्यक पुरको भी भस्मकरके देवतावांकुं पीछा स्वस्वाधिकारदिया और शिवजूनेकामकां भस्मकर दियाथा, तो देवताओं नेकांमकुं जिवाने के लिये जगदानंके निमित्त श्रीजीकांदया प्राप्त होने के वास्ते रतीकांलाय वाकी दुर्दशा श्रीजीकांदिषाई तब श्रीजीने अपनी कृपा दृष्टि तै कामकांजीवाया ताते जगतकां वहुत आनंद भया

और जगत की वोहतसी वृद्धिभई राति बहुत आनंदितभई इसीतरे असंख्यातवेर श्रीपरांवाका ने सहायकरी है और कीसी समय में इन का पराजय नहीं हुवा और हर समय देवतावांने जाकर दुः खनिवेदन किया है तो अन्यदेव वत् आपने श्रीसुख से आज्ञा नहीं करी है के कुछ काल देषो फिर मारेंगे समय आणेदो असी आज्ञा नहीं करी है उसी वक्त करुणा सिंधुने येही हुक्म किया के मैं तुमारादुःख नि- वर्त्तकरूंगा फेर कुछ भी विलंब नहीं किया और झटिति देवन का दुःख निवर्त्त करके छीना हुवा राज्याधिकार देकर अनायास होय जेसे यही आज्ञा फिर करी हे के हे देवताओं फिर तुमारा कोई काम बाकी रहाहे तो कहो वो मैं अभी करूं तुम हमारे भक्त हो तो इस सेभी जांणा जाता है के काल भगवती के आधीन हे भगवती काल के अन्य देववत् आधीन नहींहे एक जरासा भ्रूभंग करणे से हात जोड़ काल खडा होता है सोतो श्रीजीकी महिमा के आगे छोटि सी वात है परन्तु कालका काल महामृत्युंजय एसे जो शिवजी महाराज हे वो भी हात जोडे झुके हमे से सा- मने षड़े रहते हैं सो कहाहे तन्त्रोंमे करे स्थितं ब्रह्मरसं पिबंती भ्रूभंगमात्रेण जगत् स्रजंतीयस्या पुरोवद्धकरः कपालीददातुसिद्धिं मम कालिकासा ॥ १ ॥ और श्रीजी की इच्छानुकूल काल विश्व में विचरता है जरासा भ्रू भंग होणे से जगतका स्रष्टि पालन संहार होजाता है और असंख्यात ब्रह्मा विष्णु रुद्रकी उत्पत्ति भूमी है असंख्यात

